यः पोथी शहर बनारस दिवाकर छापाखानेमे गोरखमपुर शिवचरनके छापाखानेमे

छपी साकिन मोहल्ले भदैनी कालीमहल्लके पास वाः दुर्गामिश्र के छापनेवालेका

नाम मातादयाल यः पोथी जिस्को लेनी हो सो चांदनी चौकमे कुंजगल्लीके पश्चिममे

और रामचरनके दुकानपर मिलेगी मीः चैत्रसुदी १० सम्वत १९२५ वार गुरुः ॥

शान्तिमयूख स्मृतिभास्करीय नीलकण्ठभट्टः स्मृतिः Benares, Saṃvat 1925 नागर

॥ ...ाय नमः ॥ यो लीलया संतनुतेऽत्र विश्वं तस्यालयस्तात्मनि विश्वरूपे लयं नयत्याशु च पूर्णरूपः शिवं तनोत्वाशु स
...शंभो १ महोमहत्समाराध्य समाकर्ण्य गुरोर्गिरः समुच्चीनीलकंठीवक्तुं शांतिकपौष्टिके २ प्रतारयेते ह्यत्र किंचि
...तुनिर्मूलनपात्कृतिः ऊनोक्तितातो न हि तेन काश्चित् वपुष्यहीनापि चितिर्न हीयते ३ तत्र पापविशेषनिदा
नकोटि...मात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शांतिकं क्षयादिहरं दानादावतिप्रसंगवारणाय तु निदानकातं आमु
ष्मिकानिष्टनिवर्तकेष्वंवारयितुं ऐहिकेति प्रायश्चित्तेवारयितुं मात्रपदं प्रायश्चित्तं त्वामुष्मिकानिष्टनिवर्तकमपि अभिवा
रप्रत्यभिचारादावारयितुं पापाप्रयोजकमिति तपोः फलं तो हि साक्षेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात् आ
निष्टनिवर्तकत्वं च शांतिकस्य तन्निदानपापनाशरूपसामग्रीनिघटकत्वेन पुष्टिफलकं वैधं कर्म पौष्टिकं तत्र परिभाषा मार्कं
डेयपुराणे शिरःस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा प्राङ्मुखोदङ्मुखो वापि श्मश्रुकर्म च कारयेत् १ तत्रैव दैवार्चनादिकर्म
णि तथा गुर्वभिवादनं कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः २ वृहन्मनुः प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः मार्कंडे
य संकल्पविधिवत्कुर्यात्स्नानदानव्रतादिकं देवलः मासपक्षतिथीनां च निमित्तानां च सर्वशः उल्लेखनमकुर्वाणो न तस्य फलभा
ग्भवेदिति मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेपि यत्तु अनेकदिनसाध्ये कर्मणि आद्यदिने संकल्पकालीनां तिथिमधिक

रणत्वेनोक्तिस्थ ज्योतिष्टोमेनाहं यक्ष्य इत्यादिसंकल्पवाक्यं प्रयुंजते याज्ञिकाः तत्तु पदानामन्वयायोगादनादरणीयं य
दपि केचित्तेन तेन रूपेण प्रयोगांगतया विहितानामेव मासादीनामुल्लेख इति तदपि नमानाभावात् अविहितमासादिप्र
आधानादौ मासपक्षतिथीनां ज्योतिष्टोमएकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसंगाच्च अतो ज्योतिष्टोमादा
वेकादश्यादिपूर्णिमांतानामुल्लेखः एवमन्यत्रापीति दिक् अत्र च शूद्राणामप्यधिकारः श्रावयेच्चतुरो वर्णान् कृत्वा ब्रा
ह्मणमग्रतः इत्यादिवाक्येषु श्रवणस्य पुरुषार्थतया रागप्राप्तत्वेन तद्विधौ वाक्यवैयर्थ्यापत्तेः शूद्रविवक्षया श्रवणविधि
ना तेषां पुराणश्रवणाधिकारेण ज्ञानसद्भावात् वैदिकमंत्राभावे कथं तत्तत्कर्मस्वधिकार इति चेत् शृणु धर्मेप्सवस्तु
धर्मज्ञाः सतां धर्ममनुष्ठिताः मंत्रवर्ज्यं न दुष्यंति प्रशंसां प्राप्नुवंति चेति मनुना मंत्रवर्ज्जनात् यत्तु मेधातिथिर्मंत्रवर्जिते
शूद्र[illegible]दिष्वधिकारार्थमिदं न तु समंत्रकेषु मंत्रपर्युदासार्थमिति तत्र अमंत्रकोपवासादिषु शूद्राणां विधिनैवाधिका
[illegible]द्धावेतद्वाक्यानर्थक्यापत्तेः अत एव मोक्षधर्मेष्वपि मंत्रवर्जं न दुष्यंति कुर्वाणाः पौष्टिकीं क्रियां इति अत्रैतद्वाक्य
कीर्त[illegible]त्वेन तत्सामान्योपस्थितपौराणक्रियोद्देशेन मंत्रवर्ज्जनविधौ पौष्टिकीमित्युद्देश्यविशेषणस्याविवक्षितत्वं
वावनं
मजंत [illegible]तैकास्यैतस्य चैकैकवस्तुतिमूलत्वेन कल्पते गृह्यपरिशिष्टे आदौ विनायकः पूज्यः अंते तु कुलदेवताः शौनकः पु

...स्वन विधिं वक्ष्यामोथ यथाविधि प्रयोक्तुं कर्मणामादावंते चोदयसिद्धये कर्मप्रदीपे कनांदिषु तु सर्वत्र मातरः सग
णेशाः पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः १ प्रतिमासु च मुद्रासु लिखित्वा वा पटादिषु अपि वाक्षतपुंजेषु नैवेद्यै
नकैः पृथग्विधैः २ कुड्यलग्ना वसोर्धाराः सप्त वा [illegible] तेन तु कारयेत् च धारा वा नातिनीचा न चोच्छ्रिताः ३ आयुष्याणि च शांत्यर्थं
जप्त्वा तत्र समाहितः षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति ४ षड्भ्य इति छंदोगकात्यायनपरं अन्येषां तु नवदैवत्य
मन्वष्टकासु वृद्धौ च गयायां च क्षयेहनि अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सहेति ९ वचनात् सर्वत्राचार्यो यजमा
नसमानशाखो [illegible] अन्यथा त्वाचार्यस्य यजमानशाखाध्ययनाभावे तच्छाखीयपदार्थानां निर्वाह एवं न स्यात् स्वशाखयानु
ष्ठाने तु वैगुण्यं तथा च पाराशर्यः यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् अप्रमाणमृषिं कृत्वा सोंधे तमसि मज्जतीति
ऋत्विजस्तु भिन्नशाखोपि [illegible] सर्वथाचार्यवदृत्विजो मधुपर्केण पूज्याः ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनोक्तेः
संपूज्य मधुपर्केण [illegible] कर्म कारयेदिति विश्वामित्रोक्तेश्च यत्र ऋत्विग् यच्छाखीयं कर्म करोति तत्तच्छाखोक्तेन प्रकारेण कोड
नुसमयेन मधुपर्कं कुर्वंतिपाभ्रगूकाः केचित्तु परे यजमानशाखोक्तेन यजमानेन स्वशाखीया ऋत्विग्भिश्च स्वस्वशाखीयाः पदा
र्थाः अनेकेषु ऋत्विक्षु पदार्थानुसमयेनानुष्ठेया इति युक्तं तत्तच्छाखाध्ययनजन्यज्ञानसापेक्षत्वादेकप्रयोगविधिपरिग्रहाच्च

भूषणं

ऋत्विग्भ्योदेयमुक्तं लिंगपुराणे वस्त्रयुग्मं तथाप्पूरं केयूरं करणं अंगुलीभूषणं चैवमणिबंधस्यभूषणं १ कंठाभरणयुक्तानि या
रंभ धर्मकर्मणः पुरोहिताय दत्वाथ ऋत्विग्भ्यश्चापि दापयेत् २ इति आपः पूर्यंते स्मिन्नित्यपूरं जलपात्रं मत्स्यपुराणे यज
मानः सपत्नीकः पुत्रपौत्रसमन्वितः पश्चिमद्वारमाश्रित्य प्रविशेद्यागमंडपं १ संग्रहे समंततश्च सिद्धार्थान विकिरेद्राक्षोघ्न
मंत्रतः प्रतिष्ठासारे सर्वतस्तु पंचगव्येन प्रोक्षयेद्यागमंडपं आपोहिष्ठात्र्चेनैव ततः स्वस्त्ययनं जपेत् १ तत्र हेमाद्रौ वास्तुपूजा
युक्ता समंडपं प्रविश्याथ तोरणादि प्रपूज्य च वास्तुयागं ततः कुर्यात्प्रासादे मंडपे यवा १ वास्तुमंडलं च नैर्ऋत्यां नेत्रल्यां
दिशि वास्तोष्पतिं ब्रह्माद्याश्च तमर्चयेदिति शारदातिलके वास्तुहोमस्तु भिन्नस्थंडिले कार्यः मुख्यायतने वा तत्रापि प्रथक् प्र
योगत्वात् प्रधानेन समं तंत्रं न तथा वा शारदातिलके तु होम एव नोक्तः सर्वं च शांतिपौष्टिकमहादानादिलौकिकाग्नौ कार्यं श्रौत
स्मार्ताग्न्योः प्रयोगमानाभावात् यत्तु मनुः वैवाहिकेग्नौ कुर्वीत गार्ह्यं कर्म यथाविधिः पंचयज्ञविधानं च पक्तिं चान्वाहिकीं गृही
ति तत्र ग्रह्योक्तपरं वैवाहिक इति च दायाद्यकालीनयोरप्युपलक्षणं तत्सजातीयसंस्कारस्यैव सोधर्म्यावच्छेदकत्वात् य
कीत्यच्च याज्ञवल्क्यः स्मार्तकर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही दायकालाहृते वापि श्रौतं वैतानिकाग्निषु इति १ तत्रापि सामान्य
वाचनं द्वंसाद्ध्य उपसन्हिपते एतेनाहवनीयादौ निरस्ताः यदाहवनीये जुह्वतीत्यादौ अभ्यपतीग्रहे श्रौतवैदिकत्वसाम्येन
मजंत

न्त्रश्च दानप्रतिग्रहोपस्थितिवत् वैदिकहोमेपस्थितेश्च मध्यप्यग्नेर्गार्ह्यस्मार्त एव श्रौतं वैतानिकएवेति नियमेन स्मृ
नके कर्मणि श्रौतस्मार्ताग्न्योः प्राप्तिः संभाव्यते अथापि न साहवनीयावसथ्यत्वरूपेण किंतु लौकिकसाधारणज्वलनत्वेनै
व वैधाहुतिप्रक्षेपे आहवनीयत्वादिविधिप्राप्तेश्च अत एव सर्वाधानिन औपासनाभावात् वैतानिकाग्नावेश्च ने
नगार्ह्यं लौकिक एव कार्यं अमुमेव सर्वमर्थं स्मृत्यर्थसारकृदमपि संजग्राह श्रौतहोमोपासने कुर्यात्सर्वाधानी तु लौकिके
मंत्रलौकिके कुर्यात् श्रौतं वैतानिकाग्निष्विति १ यत्तु नारायणवृत्तौ सर्वाधानिनः सीमंतोन्नयनादिगार्ह्यकर्मार्थं स्मार्ताग्निरुत्पा
दनीय इति तत्र मूलं बौधायनसूत्रं यदपि वितानेष्वरण्ये ह पञ्च औपासनं कुर्युः तत्र मूलमन्वेष्यं कातीयपरं वा तत्र तत्सू
वेतथाम्नानात् अत एव सर्वविनायकशांतौ लौकिकाग्निमेवावोचत् अतः स्मृत्युक्ते लौकिके एवेति रत्नाकरे शुभभया
त्रं तु कोश्यं स्यात्तेनाग्निप्रणयं हुधः तस्याभावे शरावे शानवेनाभिमुखं चरेत् १ गोभिलीये आहूय चैव वह्निं ज्योपोपत्र विहि
तोनलः तथा लक्षहोमे तु वह्निः स्यात्कोटिहोमे हुताशनः पूर्णाहुत्यां मृडो नाम शान्तिके वरदः सदा १ अन्येषु संस्कारादि
कर्मस्वग्नेर्नामविशेषाः प्रयोगरत्ने होमविशेषो गोभिलीये न मुक्तकेशो जुहुयान्नानुपादिक्यालालोकपार्श्वेपचविघ्नविना
यकाः ३ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ४ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः

शुभावहाः दद्यादित्यत्रापि देहलीदीपवदन्वेति विनायकस्य जननीमुपतिष्ठेत ततोऽम्बिकां दूर्वां सर्षपपुष्पाणां दत्त्वार्घं पूर्णमं
जलिं अनन्तरं विनायकमम्बिकां च दूर्वार्घमंजलिं अर्घं च दत्त्वोपतिष्ठेत उपस्थानमंत्रमाह रूपं देहि यशो देहि भगं भगा
वन्देहि मे पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे १ देहि मे भगवन्भगमित्युक्त्वा विनायकमप्युपतिष्ठेतेति विज्ञाने
श्वरः अत्र मदनः विनायकोपस्थानं कृत्वाम्बिकोपस्थानं कार्यमित्याह किंच ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ब्रा
ह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि गुरोराचार्याय भिक्षान्नदक्षिणामपि एवं विधिं कर्म कुर्वतः फलमुक्तं एवं विनाय
कं पूज्य ग्रहांश्चैव विधानतः कर्मणां फलमाप्नोति श्रियमाप्नोत्यनुत्तमां १ अस्य कर्माङ्गत्वेन पौष्टिकत्वेन च वर्णान्तरेषूपस्था
प्यत्राधिकारः शूद्रस्य तु मंत्रवर्जं तान्प्रक्रम्य मंत्रवर्जेन न दुष्यति कुर्वाणाः पौष्टिकीं क्रियामिति मोक्षधर्मश्रवणात् महार्णवे
पि यजमानस्तु शूद्रश्चेदिति वदन्नस्याधिकारमभिप्रैति ः इति विनायकशांतिः ः अथ प्रयोगः कृतो देशकालौ सं
कीर्त्य विनायकोपसर्गनिवृत्त्यर्थममुककर्मणो निर्विघ्नतासिध्यर्थं वा विनायकस्नपनं करिष्य इति संकल्पयेत् ततः पुण्याह
वाचनवर्ज्यं नान्दीश्राद्धान्तं यथोक्तं कुर्यात् अपरे पुण्याहवाचनमप्याहुः अग्रे तस्य कर्तव्यत्वात् अथ चायत्नेनानुसंपूज्य पार्वतीभौ
मजं तथा ऊष्मस्य पितरं केतुमर्कमारं सितं तथा २ धिषणाङ्केदपुत्रं चकोरान्न क्ष्मच भारत विधुं दद्याहुते यनेदकस्य च धारि

ग्रा·म रामिति २ सोमकेशः शिवः भीमजो गणेशः आर्यो भौमः सितः शुक्रः धिषणो गुरुः इंदुपुत्रः बुधः कोणः शनैश्चरः लक्ष्मीतद्वं
४ श्चंद्रः वाहुलेयस्कंदः नंदकधारी कृष्णः गौरशर्षपकल्केन साज्येनोन्मादितस्य च सर्वौषधैः सर्वगंधैर्विलिप्य शिरसस्तथा १
भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः गौरसर्षपपिष्टेन गोघृतयुक्तेनोत्सादितस्योद्वर्तितस्य सर्वौषधानिष्ठ दोगपरि
शिष्टं कुष्ठमांसी हरिद्रे द्वे मुरा शैलेयचंदनं वचा कर्पूरमुस्ता च सर्वौषध्यः प्रकीर्तिताः १ सर्वगंधे चंदनकुंकुमागरुकस्तू
रिकाजातीफलादिभिः वेष्टितं सितवस्त्रप्रच्छादितं श्रीपर्णीपीठभद्रासनं स्वस्तिवाच्याः स्वस्तिवाचनीयाः ब्राह्मणद्वारा भ
स्वस्तिवाचनं कार्यमित्यर्थः अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् मृत्तिकां रोचनां गंधं गुग्गुलं तु वाप्सु निक्षि
पेत् १ या आहृता एकवर्णाश्चतुर्भिः कलशैर्हृदात् चर्म अनडुहं रक्तं स्थाप्यं भद्रासने ततः २ अनडुहं चर्म च वेद्यां
प्राग्ग्रीवमूर्ध्वलोमावस्थाप्यमिति विज्ञानेश्वरः पाअपेति चत्वारोपि कलशा भद्रासनस्य पूर्वादि चतुर्दिक्षु स्थाप्याः इति
शाप्रदीपिकाः पूर्वादिदिक्ष्ववस्थितकलशोदकेनाभिषेकक्रमेण मंत्रानाह सहस्राक्षं शतधारमृषिभिः पावनं कृ
तं तेन त्वामभिषिंचामि पावमानीः पुनंतु ते १ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः भगमिंद्रश्च वायुश्च भगं सप्तर्षयो
ददुः २ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु ते सदा ३ सहस्राक्षं वहु शास्तिकं ॥

पवमानीइत्यनंतरमापइतिशेषः भगंकस्याणां सौभाग्यमकल्याणां ३ दग्निशावस्थितेनाभिषेके पूर्वोक्तास्त्वपराश्चमंत्राः स
वैश्चतुर्थमिति विज्ञानेश्वरोक्तलिंगात् किंच स्नातस्य सार्षपतैलं श्रुवेणोदुंबरेणतु जुहुयान्मूर्द्धनि कुशान् सव्येनप
रिगृह्यच १ सव्यपाणिगृहीतकुशांतरिते सर्षपतैलं उदुंबरनिर्मितेन श्रुवेण यजमानमूर्द्धनि जुहुयात आचार्यः मितश्च
संमितश्चैव तथा शालकटंकटौ कूष्मांडो राजपुत्रश्चेत्यंते स्वाहासमन्वितैः १ नामभिर्बलिमंत्रैश्च नमस्कारसमन्वितैः न
मः स्वस्ति स्वाहेति चतुर्थी एतानि च षट् विनायकनामानीति विज्ञानेश्वरः अपरार्कस्तु शालकटंकटस्येकवचनांतेप
पाठ तेनतन्मते षडेवाहुतयो भवंति अत्र लौकिकेग्नौ स्थालीपाकविधिना चरुं कृत्वा तेभ्य एवाहुतिषट्कं हुत्वेंद्रादिद
शलोकपालेभ्यस्तन्नामाद्बलिं दद्यादिति मिताक्षरायां तत्र च चरुहोमे इंद्रादिभ्यो बलिदाने च मूलं चिंत्यं अंते स्वाहा
समन्वितैर्नामभिर्जुहुयात् नमस्कारसमन्वितैश्च मितादिभ्यो बलिं दद्यात् इति वक्ष्यमाणेनैव ध्यानइति तु पुस्तके
दृष्टा चतुष्पथे शूर्पे कुशानास्तीर्य सर्वशः कृताकृतांस्तंडुलांश्च पललौदनमेव च १ मत्स्यान् पक्कांस्तथैवामान् मांसमेवा
परं तु पुष्पं चित्रं सुगंधं च सुरां च त्रिविधामपि २ मूलकं पूरिकापूपांस्तथैवोडेरकस्रजः दध्यन्नं पायसं चैव गुडपि
ष्टं समोदकं ३ एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः कृताकृतान् तंडुलान् पललौदनः तिलपिष्टमिश्र ओदन

इतिमिताक्षरायां अपक्वमांससमिश्रओदनेइतितुप्रुक्तं पललंकृच्यमामितिकोशात् अमानपक्वान मांसमेतावदेवतु पैक
मपक्वं चमांससमन्यादित्यर्थः त्रिविधासुरा गौडी पैष्टी माध्वी च मूलककेदाकाशे भक्ष्यविशेषइतिमिताक्षरायां स्वरूपत
रावग्राह्यमितितुप्रुक्तं उभयमपिग्राह्यमिति महार्णवे अपूपाः स्नेहपक्वागोधूमविकाराइतिविज्ञानेश्वरः उंडेरकाः पि
ष्टकास्तेनानाविधास्तेप्रोक्ताः स्वजइत्युच्यते गुडपिष्टेगु इमिश्रेशाल्यादिपिष्टे अत्रसुरामांसं चाब्राह्मणविषये ब्रा
ह्मणैस्तुमांससुरास्थानेसक्तवणपायसदुग्धंचग्राह्यं पापवलवर्णापेतंमांसस्थानेप्रकल्पयेत दुग्धलवणसंमिश्रंसुरा
स्थानेप्रकल्पयेत १ इतिस्मरणादितिमहार्णवादिषुविनापक्वाविकांविकागायत्रीभ्यांविनायकमंत्रिकां[illegible]पूर्वोक्तः
द्रव्यजातंतत्पार्श्वतउपकृत्यततः शेषंभूर्येनिधायचतुष्पथेशूर्पेसंस्थाप्यबलिंदद्यादेतैर्मंत्रैः बलिं[illegible]देवा आदित्या
वसवस्तथामरुतोप्याश्विनौरुद्राः सुपर्णाः पन्नगाग्रहाः १ असुरायातुधानाश्चपिशाचामातरोगणाः शाकिन्योयक्षवेता
लायोगिन्यः पूज्याः शिवाः २ जृंभकासिद्धगंधर्वाः नागाविद्याधरानगाः तितजानुकः उत्तानेनैवहस्तेन अंगुष्ठाग्रेणपी
डितं संहतांगुलिपाणिनास्रुवाग्यतोजुहुयाद्धविरिति बहुकर्तृकेहोमेप्रत्याहुतिसामाशक्तेः होमारंभएवदत्तास्वचतुर्थ्यंते
नोदिक्पसर्वाणिद्रव्याणित्यजेदितिहेमाद्र्यादयः इतिपरिभाषा अथविनायकस्नपनं याज्ञवल्क्यः विनायकः कर्मवि

ग्रसिध्यर्थं विनियोजितः गणानामाधियत्ये च रुद्रेणाब्रह्मणातथा तेनोयसृष्टोयस्तस्यलक्षणानिनिबोधत १ स्वप्नेवगाहतेत्य
र्थं जलं मुंडांश्चपश्यति काषायवाससश्चैवक्रव्यादांश्चाधिरोहति २ अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति व्रजन्नपित
थात्मानंमन्यतेनुगतंपरैः ३ तेनविनायकेनउपसृष्टउपद्रुतः स्वप्नेस्नातसाऽपाह्नियततत्रमज्जतिवानत्ववगाहनमा
त्रोविवक्षितंतस्यशुभसूचकत्वात् अंत्यजैश्चांडालैः प्रत्यक्षलक्षणान्याह विमनाविफलारंभः संसीदत्यनिमित्त
तः तेनोपसृष्टोलभतेनराज्यंराजनंदनः १ कुमारीनैवभर्तारं अपत्यंगर्भमंगना आचार्यत्वश्रोत्रियश्चनशिष्योध्ययनं
तथा २ वणिक्लाभंनचाप्नोतिकृषिंचापिकृषीवलः संसीदतिकारणंविनादीनमनस्कोभवति एतदुपलक्षण
यस्ययदिष्टंतच्चेद्रुक्सामग्रीसत्वेननप्राप्नोतितदातदुपद्रुतोबोध्यः एतदुपद्रवपरिहारार्थंकर्माह स्नपनंतस्यकर्त्त
व्यंपुण्येऽह्निविधिपूर्वकं अत्रपुण्याह्नोत्सवविशेषेषु विशेषोपराकेभविष्ये शुक्लपक्षेचतुर्थ्यांचवारेणाधिषणस्यच
तिष्येचवारेनक्षत्रेतस्यैवपुरतोनृपेति १ अत्रादौदेवपूजोक्ता तत्रैव व्योमकेत्विक्चतुष्टयंवृणुयात ऋत्विजोऽनु
सर्तौतिकेचित् तदाचार्यएववक्ष्यमाणमभिषेकंकुर्यात् यजमानः प्रतिमास्वक्षपुंजेषुवाशिवं पार्वतीं गणेशं वसुदे
वंकेतुं अर्कं भौमं शुक्रं गुरुं बुधं शनिं चंद्रं राहुं स्कंदं कलशं वावाह्य पूजयेत ततः आचार्यः पंचवर्णचूर्णैः पूर्वादिच

तुर्दिक्षु स्वस्तिमध्यस्थवेद्यां चैकमिति स्वस्तिकपंचकमालिख्य मध्यस्थस्वस्तिकोपर्यानडुहं रक्तं चर्म प्राचीनग्रीवमूर्ध्वलोम
संस्थाप्य तस्योपरि श्रीपर्णीपीठं संस्थाप्य सितेन वाससा संछादयेत् एतद्ब्रह्मासनमिति चतुर्षु स्वस्तिकेषु पूर्वादिदिक्षु चत्वा
रोपि ऋत्विजः कलशान्संस्थापयेयुः आचार्यो वा तत्रायं प्रकारः महीद्यौः पृथिवी च न इति भूमिं स्पृष्ट्वा सं प्रार्थ्य ओष
धयः समित्यृचा यवान् क्षिप्त्वा आकलशेषु सिंचतीति तेषु कलशान् संस्थाप्य इमं गंगे इति तीर्थोदकेनापूर्य गंधद्वारेति चंदनागरुक
स्तूरीकर्पूरगोरोचनां* दीन् गंधान् गुग्गुलुं च निक्षिपेत् ॐ या ओषधीरिति सर्वौषधीः ॐ पयः समित्यृचा वा काण्डात्का
ण्डादिति दूर्वाः अश्वत्थे व इति पंचपल्लवान् स्योना पृथिवीत्यनेन उद्धृतासि वराहेण कृष्णेन शतबाहुना मृत्तिके हर मे पा
पं यन्मया दुष्कृतं कृतं इति अनेन पंच मृदः क्षिपेत् याः फलिनीरिति फलं स हि रत्नानि इति पंचरत्नानि हिरण्यरूपइ
ति हिरण्यं युवा सुवासा इति अनेन वस्त्रेण रक्तसूत्रेण च वेष्टयेत् पूर्णा दर्वीति धान्यपूर्णपात्रं कलशोपरि निदध्यात्
अत्र च वरुणमावाहनपूजने अपि केचिदाहुः ततः कलशे सर्वे समुद्रा इति गंगाद्यावाहनं ततः कुंभाभिमंत्रणं कलश
स्य मुखे विष्णुः कंठे रुद्रः समाश्रितः मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः १ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुं
धरा ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः २ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः इति ततः कुंभप्रार्थना देवदा

नवसंवादेमथ्यमानेमहोदधौउत्पन्नोसितदाकुंभविधृतोविस्नुनास्वयं १ त्वत्तोयेसर्वेतीर्थानिदेवाःसर्वेत्वयिस्थिताःत्वयि
तिष्टंतिभूतानित्वयिप्राणाःप्रतिष्टिताः २ शिवःस्वयंत्वमेवासिविस्नुस्त्वंचप्रजापतिःआदित्यावसवोरुद्रोविश्वेदेवाःस
पैतृकाः ३ त्वयितिष्टंतिसर्वेपियतःकामफलप्रदाःत्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ४ सान्निध्यंकुरुमेदेवप्र
संन्नोभवसर्वदा इतितत्रऋत्विजआनोभद्राइतिशांतिसूक्तंपठेयुरितिकेचित् आनोभद्रेतिशांतिसूक्तस्यराहुगणोभ
विश्वेदेवास्त्रिष्टुप् आद्यासप्तमीचजगत्योषष्टीविराट्स्थानाशेषास्त्रिष्टुभःशांतिसूक्तजपेविनियोगःआनोभद्राःशन्नोवा
तःपर्वतामित्यादिकंवातस्मिन्नेवसमयेआचार्योभद्रासनस्योत्तरतैईशान्यांवावस्त्राच्छादितपीठद्वयेविनायकप्रति
मामंबिकाप्रतिमांचाग्न्युत्तारणपूर्वकंप्रतिष्टाप्यषोडशोपचारैःपूजयेदितिनिबंधकृतः ॥ तत्रविनायकमंत्रः ॥
गणानांत्वागृत्समदोगणपतिर्जगतीगणपत्यावाहनेविनियोगः गणानांत्वा० तत्पुरुषायविद्महेवक्रतुंडायधीमहि तन्नोदंति
प्रचोदयात् इतिवा गौर्यास्तुगौरीर्मिमायदीर्घतमाउमाजगतीगौर्यावाहनेविनियोगःगौरीर्मिमाय० सुभगायैविद्महे
काममालिन्यैधीमहि तन्नोगौरीप्रचोदयात् अत्रमिताक्षरायांचरुहोमउक्तःशिष्टाश्चकुर्वंतितस्मिन्पक्षे आचार्यो
गृह्योक्तविधिनाकुंडेस्थंडिलेवाग्निंप्रतिष्टाप्यप्रादेशमात्रसमीत्द्वयमादायास्मिन्होमेदेवतापरिग्रहार्थम

न्वाधानं करिष्य इति संकल्प्य चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं मितं संमितं सेमितं शालंकटंकटं कूष्मांडं राजपुत्रमेतान्
एकैकया चर्वाहुत्याप क्षेशेषेण स्विष्टिकृतमित्यादि युक्त्वाग्नावादध्यात् अपरार्कमेते तु पंचैवाहुते प्रतीत्येतन्वाधाने भ
होमद्रव्ये च तथैवानुसंधेये ततः परिसमूहनादि चरुस्रपणांतं कृत्वा गोघृततैलोलीकृतेनगौर सर्षपकल्केनोद्वर्ति
तांगं सर्वौषधी चूर्णैः कस्तूरि कर्पूर चंदनादि भिर्लिप्त शिरसं यजमानं आचार्यो भद्रासन उपवेशयेत् ततो यजमा
नः स्वस्ति वाचनं कुर्यात् अनंतरं रूप गुण शालिनीभिः सुवासिनीभिः नीराजनं कारयेत् ततो भद्रासनात्पूर्व देशा
वस्थित कलशमादायाभिषिंचेत् मंत्रश्च सहस्राक्षं शतधारं ऋषिभिः पावनं कृतं तेनत्वामभिषिंचामि पावमा
नीः पुनंतु ते १ ततो दक्षिण देशावस्थित कलशमादाय भगंते वरुणो राजा भगं सूर्यो बृहस्पतिः भग मिंद्रश्च वायुश्च
भगं सप्तर्षयो ददुः इत्यनेनाभिषिंचेत् ततः पश्चिमदिगवस्थितमादाय यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ल
लाटे कर्णयो रक्ष्णो रापस्तद्घ्नंतु ते सदेति १ तत उदक्देशावस्थितं कलशमादाय पूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिंचेत् बृहस्पत्यश
रेणान्येपि मंत्रा उक्ताः एतद्धैणवनं स्नानं सहस्राक्ष मृषिस्मृतं तेन त्वां शतधारेण पावमान्यः पुनंतु मा १ शक्रादि दश दि
क्पाला ब्रह्मेशा केशवादयः आपस्तेघ्नंतु दौर्भाग्यं शांतिं यच्छंतु सर्वदा १ सुमित्र्यान आप ओषधयः संतु दुर्मित्र्यास्त

स्मेसंतुपोष्मान्ह्वे ष्टिपंचवयंचविष्मः समुद्रागिरयोनद्योमुनयश्च पतिव्रताः दौर्भाग्यंभंतुतेसर्वे शांतिंयछंतुसर्वदा १ पादगु
ल्फोरुजंघादौ नितंवोदरनाभिषुस्तनोरुवाहुहस्ताग्रग्रीवाअंसांघ्रिसंधिषु २ नोगाललाटकर्णभ्रूकेषांतेषुचय म
स्थितं तदाशोभंतुदौर्भाग्यं शांतिंयछंतुसर्वदा ३ इत्येतेरप्यभिषिंचेदितिकेचित् चतूर्थकलशाभिषेचने एवैतेपठनी
याः अथाचार्योयजमानस्यपश्चिमतस्तिष्ठन्सव्यपाणिगृहीतकुशांतर्हितयजमानशिरसि ओंहुंवरेणश्रुवेसार्षयंतै
लंजुहुयात् ॐ मित्रायस्वाहा यजमानोमित्रायस्वाहा यजमानो मितायेदंनममेतित्यजेदिसंवंसर्वत्रापि ॐ संमित्रा
यस्वाहा ॐ शालाय ॐ कटंकटाय ॐ कूष्मांडाय ॐ राजपुत्रायेति अथाचार्योन्यत्रेनाद्याज्यभागांतेकृत्वान्वरुणामि
तादिभ्य एवंजुहुयात् यजमानस्तुपूर्ववत्त्यजेत् आचार्यः स्विष्टिकृतादिमरणीताविमोकांतकर्मसेषंसमापयेत् यजमा
नस्त्वभिषेकशालायामिंद्रादिदशलोकपालेभ्योनाम्ना दिक्षुविदिक्षुचवलीन्दद्यात् एतानि अग्निस्थापनचरुहो
मदिक्पालवलिदानानि मित्रास्याममनुस्मृत्योक्तानि ततोमितायएषवलिर्नममेतिपायसेनमाषभक्तेनवामित्रादिभ्यो
वलिंदत्वाविनायकाविकयोरथतः सकृदवहतंतंदुलानामांसेनतिलपिष्टेनवामिश्रमोदनेमत्स्यमांसेपक्कमपक्कंच गौ
डींपैष्टीमाध्वीतित्रिविधासुराचव्राह्मस्यभांसस्थानेमलवणापायसं सुरास्थानेमलवणंदुग्धंचित्रंपुष्पंसुरादिद्रव्यंमूलंकं

शा॰म॰ पृष्टिकाः अपूपाः उडेरकस्रजः दध्यन्नं पायसं गुडमिश्रं तण्डुलादिपिष्टं मोदकांश्च पात्रे संस्थाप्य तत्पुरुषाय विद्महे इति
८ मन्त्रेण विनायकाय शुभगायै विद्महे इति मन्त्रेण चाम्बिकायै निवेदयेत् अथाचार्यो नूतनसूर्पे सर्वमुपहारशेषं सं-
स्थाप्य चतुष्पथं गत्वा तत्र गोमयेनोपलिप्य कुशानास्तीर्य तत्र सूर्पं प्राङ्मुखं संस्थापयेत् यजमानस्त्वेतैर्मन्त्रैर्बलिं द-
द्यात् बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा मरुतो चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः १ असुरा यातुधाना-
श्च पिशाचा मातरोरगाः शाकिन्यो यक्षवेतालाः योगिन्यः पूतनाः शिवाः २ जृम्भकाः सिद्धगन्धर्वाः नागा विद्याधरा न-
गाः दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ३ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः मा विघ्नं मा च मे पापं मा
सन्तु परिपन्थिनः ४ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः इति देवादित्यवसुमरुदश्विरुद्रसुपर्णपन्नगग्रहासु-
रयातुधानपिशाचमातृउरगशाकिनीयक्षवेतालयोगिनीपूतनाशिवजृम्भकसिद्धगन्धर्वनागविद्याधरनगदिक्पा-
ललोकपालविघ्नविनायकजगच्छान्तिकर्तृब्रह्मादिमहर्षिभूतप्रेतेभ्य इदं न ममेति त्यागः ततः शिरसा भूमिं गत्वा पु-
ष्पं पुनरर्पयेत् तत्पुरुषायेति मन्त्रेण विनायकाय शुभगाय इत्यम्बिकायै च दद्यात् ततो दूर्वासर्षपपुष्पाणां पूर्वोक्तविनायक-
मन्त्रेण विनायकायाञ्जलिं दद्यात् अम्बिकायै तन्मन्त्रेण तथैव दद्यात् ततो विनायकमम्बिकां चोपतिष्ठेत् मन्त्रस्तत्रूपं देहि

ह्रिपशोदेहि भगंभगवतिदेहिमेपुत्रान्देहि धनंदेहि सर्वाकामांश्चदेहिमे १ अस्मिन्भगंभगवन्देहिमेइत्यूह्यविना यकमुपतिष्ठेत् अनंतरंयजमानः प्राङ्मुखोपविष्टः उदङ्मुखानाचार्यादीन्पूजयित्वाचार्यायवासोयुग्मसुरूपांत्रलि ग्म्यश्चान्यांयथाशक्तिदक्षिणांदद्यात् ततउत्तिष्ठन्नत्सर इत्यनेनयांतुदेवगणाइत्यनेनचविनायकंमविकांचो पस्थायविसृज्यप्रतिमादिसर्वासामग्रीमाचार्यायदद्यात् ततोयथाशक्तिभूयसींदक्षिणांदीनानाथेभ्योदत्वा यथाश क्तिविनायकस्याप्रीत्यर्थंविकाप्रीतयेचब्राह्मणान्भोजयित्वासंकल्प्यवायसस्मृत्येत्युक्तान्न्यूनातिरिक्तंसर्वंसपूर्णोम स्त्वितित्ता संप्रार्थ्यतैरनुज्ञातः सुहृद्युक्तोभुंजीत ःः इतिश्रीमत्शंकरभट्टसूनुभट्टनीलकंठकृतौभास्करेशांतिमयू खेविनायकशांतिपद्धतिः ःः अथग्रहयज्ञः स्कांदे देवदानवगंधर्वायक्षराक्षसकिन्नराः पीड्यंतेग्रहपीडाभिः किंपु नर्भूविमानवाः १ शनैश्चरेणासोमेनरामासेनियोजितः राहुनापीडितोराजानलोभ्रांतोमहीतले २ अंगारकनि रोधेनरामोराष्ट्रान्निवारितः अष्टमेनशशांकेनहिरण्यकशिपुर्हतः ३ रविणासप्तमस्थेनरावणोविनिपातितः गुरु णाजन्मसंस्थेनहतोराजासुयोधनः ४ पांडवासौम्यपीडायांविकर्मणि नियोजिताः षष्ठेनोशनसायुद्धे हिरण्याक्षो निपातितः ५ एतेचान्येचबहवोग्रहदोषेसुपीडिताः याज्ञवल्क्यः ग्राहाधीनानरेंद्राणांमुच्छ्रायाः पतनानिच भावाभा

शां·भ· वीर्यजगतस्तस्मात्पूज्यतमाग्रहाः१ अथयोगपारिजातउत्पलेस्यरिमले कार्यारंभेषुसर्वेषुप्रतिष्ठास्वध्वरेषुच नववेश्मप्रवेशेनग
९ र्भाधानादिकर्मसु आरोग्यस्नानसमयेसंक्रांतौरोगसंभवे २ अभिचारेचयःकुर्याद्ग्रहपूजांविधानतः सोभीष्टफललाभमेति
निर्विघ्नेननसंशयः इति याज्ञवल्क्यः श्रीकामःशांतिकामोवाग्रहयज्ञंसमाचरेत् वृष्ट्यायुःपुष्टिकामोवा तथैवाभिचर
न्नपि १ मात्स्येग्रहयज्ञास्त्रिधाप्रोक्ताः पुराणश्रुतिकोविदैः प्रथमायुतहोमःस्याल्लक्षहोमस्ततःपरं तृतीयःकोटिहो
मस्तुसर्वकामफलप्रदः ग्रहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः रुद्रहस्तनभूमौवाचतुरस्रमुदक्प्लवं १ दशहस्तमथा
ष्टौवाहस्तान्कुर्याद्विधानतः तस्यद्वाराणिचत्वारिकर्तव्यानिविचक्षणैः २ स्कांदेनवग्रहमखेकुंडहस्तमात्रेसंभवे
त् चतुरस्रमरत्निहस्तंयोनिवक्त्रंसमेखलं १ योनिरेखवक्त्रंपस्यतत् पुत्रादिकामनायांतुयोन्याद्याकारा अपिभवेति चतु
रंगुलविस्तारामेखला...तद्द्दुच्छ्रिता अत्रविशेषोपदेशादेकैवमेखला मात्स्येवितस्तिमात्रायोनिःस्यात् षट्सप्तांगुल
विस्तृता कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता १ गजोष्ठसदृशीतद्वदायताच्छिद्रसंयुता मेखलोपरिसर्वत्र अश्व
त्थदलसन्निभा २ एकंकुंडंचमंडपेशानभागउदीच्यांवेतिहेमाद्रिः अयुतादिहोमप्रकरणेवशिष्टस्तुकुंडंतन्मध्यभागे
तुकारयेच्चतुरस्रकंकुंडस्यैशानभागेतुपूजावेदीप्रकल्पयेत् १ इत्याह अत्रचतुरस्रमित्यनेनक्षत्रियादिपुरस्कारेणवि

हिंतानामाकारविशेषाणां स्त्रीपुरस्कारेण विहितस्य योन्याकारस्य निवृत्तिः योनौ पृथ्वाः भुभं दलेद्वाभ्यं द्वत्याद्याः काम्याभ
त्वाकाराभवंस्येव वेद्यांविशेषमाह गोभिलः कुंडस्य प्रागुदीच्यां वा प्राच्यामुत्तरतोपि वा चतुरस्रं चतुर्द्वारं कर्त्तव्यं ग्रहपी
ठकं १ श्रीकामः पूर्वरः कुर्यात्पुष्ट्यर्थं दक्षिणे न तु पश्चाद्विजन्मसिध्यर्थं शांत्यर्थं चोत्तरेण तु २ ईशान्यां सर्वकामाप्त्या
नैपालभिचारके नैऋत्यां पुत्रलाभाय पुष्ट्यर्थं वा पवेन तु ३ द्विनिवेदी तु स्थंडलपक्षे कार्या वशिष्टः त्रिखेदश्च दलप
द्मवेदिको पोक्तंकुलेः अत्रैकाग्निव्रह्माचार्यपक्षमुक्त्वा नेयांन वसंख्या कुंडेषु तत्तद्व्हाकारं चाह प्रयोगपारिजाते भग
वान् मनोरमे भूप्रदेशे होमशालामलंकृतां कृत्वा तु संदृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् १ तन्मध्ये भास्करस्थानं भवेत्त
दोत्तरे बुधः पूर्वस्मिन्भागवस्थाम् सोमो दक्षिणपूर्वके २ दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे शनेस्तु पश्चिमे स्था
नं केतोरुत्तरपश्चिमे ३ उत्तरस्यां गुरोः स्थानं एवं वस्थंडिलं भवेत् स्थंडिलमध्यर्थं भास्करस्य तु वृत्तं स्याच्चंद्रस्य चतुरस्र
कं ४ कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु गुरोर्दीर्घं चतुष्कोणं पंचकोणं सितस्य तु ५ चापाकारं शनि राह्वोः सूर्प
केतोर्ध्वजाकृतिः नवधा विभजेदग्निं श्रोतकर्मविधानतः ६ ऋत्विजश्च पथायोगं कुंडेषु ब्राह्मणाः पृथक् औंध्रस्त्रुवे
णजुहुयात्स्वर्पपावकरुद्रकान ७ ऋत्विजो जहु पुर्मंत्रैश्रुवेणैव पृथक् पृथक् अष्टौ च कलशान् गृह्य समारोपयेण

ग्रं·म मग्निषु द्रव्यधानार्थो विधायेमानित्थं होमं समाचरेदिति अथैव स्थंडिलं भवेदि सने न स्थंडिलानां कुंडानां च सम आका
५० रस्तानौ दिक्षु निर्देशश्चोक्तः ब्राह्मणाः पृथगोत्यनेनन्वाचार्यान् व ब्राह्मणाश्चेत्युक्तं अत्रार्थ संक्षेपः प्रयोगपारिजा
ते मध्यकुंडे स्थाग्निं प्रणीय ततोन्वाचार्या अष्टसु कुंडेष्वग्निं प्रणीयाज्यभागांतं कार्दिसमिद्धि गुडोदनादिकं विनि
राज्येन च ग्रहादिमंत्रैर्हुत्वा अष्टसमस्तव्याहृतिभिश्च तिलान् हुत्वा स्विष्टकृतादिहोमं शेषं कृत्वा पूर्णाहुतिं जुहु
युरिति कुंडमुक्त्वा स्थोदे तस्य चोत्तरपूर्वेण स्थंडिलं हस्तमात्रकं क्षिप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितं १ स्थंडिल
वेदिः वप्राभ्यां स्थलमात्स्य द्व्यंगुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः अंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि १ द्व्यं
गुलस्तु विस्तारः सर्वेषां कथितो बुधैः २ तत्र ग्रहानाह याज्ञवल्क्यः सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः शु
क्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः १ स्कांदे नवग्रहमखे कार्या ऋत्विजश्चतुरः शुभान् अथवा चैकमभ्यर्च्य विधि
ना ब्राह्मणा सह १ तथा नवग्रहमखे विप्राश्चत्वारो वेदवादिनः त्रिविधमपि नवग्रहमुपक्रम्य वशिष्ठस्तु षोडश ब्रा
ह्मणानशुद्धान् दंभानृतविवर्जितान् तेषां मध्ये श्रेष्ठतमं आचार्यं तं प्रकल्पयेदिति १ अत्र पारिजाते नवाचार्याणां एको ब्र
ह्मापर ऋत्विजः आचार्येभ्यो नवभ्यश्च प्रहावेनफलं ततः इत्युक्तेः आचार्यकर्म एकं एव कुर्यात् परे त्वन्वारंभमात्रे धेन्वा

घाग्रहदक्षिणा अपितेभ्य एव देया इत्याद्युक्तं तदप्युक्तं उपक्रमे एकाचार्येनवाचार्यसमुदाये प्राणावदुपदधातीतिवत्
लिंगसमवायमात्रेणानवभ्य इत्युपसंहारस्यपदोपपतेः उपक्रमेपि पद्यथाचार्यस्यसंस्कार्यत्वेनैकत्वमविवक्षितं
थोपाध्याचार्यस्यभूतभाव्युपयोगाभावात्संस्कार्यत्वानुपपतेः वृत आचार्यः स्वकर्मकुर्यादितिकल्पितेवाक्यउपादेयत्वा
दाचार्यस्यभवत्येकत्वंविवक्षितं उपपादितंचेदमध्वर्युंवृणीतेहोतारंवृणीतेपुरोहितंवृणीत इत्यत्र मिश्रे जन्मभूगो
त्रमग्निश्चग्रहाणां स्थानमुखानिच योज्ञात्वाकुरुतेशांतिंग्रहास्तेनावमानिताः १ तत्रवर्णजन्मनीआह दामोदरीये
हयाराणारः रक्तः कश्यपजोभानुः शुक्लोब्रह्मसुतः शशीरक्तोरुद्रसुतोभौमः पीतःसोमसुतोबुधः १ पीतोब्राह्मणः सुरा
चार्यः शुक्लः शुक्रोभृगूद्वहः कृष्णः शनीरवेःपुत्रः कृष्णोराहुःप्रजापतेः २ कृष्णः केतुः कृशानूत्थः कृष्णापापाल्वयो
ध्यमी ३ स्कांदे उत्पन्नोर्कः कलिंगेषुयमुनायांचचंद्रमाः अंगारकस्त्ववंत्यां मागधायांहिमांबुजः सैंधवेषुगुरुर्जा
तः शुक्रोभोजकटेतथा शनैश्चरस्तुसौराष्ट्रराहुर्वैराटिनापुरे अंतर्वेद्यांतथाकेतुरित्येताग्रहभूमयः १ यस्ययस्यचयद्
गोत्रंतत्तत्क्षोम्यतःपरं आदित्यःकाश्यपगोत्रे आत्रेयश्चंद्रमाभवेत् १ भारद्वाजोभवेद्भौमस्तथा त्रैपर्णसोमजः गुरु
पूर्णोंगिरसगोत्रः शुक्रोवैभार्गवस्तथा २ शनिःकाश्यपः राहुः पैठीनसिस्तथा केतवोजैमिनीयाश्च ग्रहाभिसंदना

कैर्स्नैरष्यो इत्येनत्यक्षपोमंडलाद्याकारतेति हेमाद्रिः तत्रैव भुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ प्रत्यङ्मुखः ।
शनिः सोमः शेषा दक्षिणतोमुखाः १ इदं च भुक्रादीनां प्राङ्मुखत्वात् आदित्याभिमुखाः सर्व इति मात्स्योक्तादित्याभिमु
खत्वेन विकल्प्यते यत्तु हेमाद्रिर्विकल्पपरिजिहीर्षया प्राङ्मुखावूर्ध्वदृष्टी उदङ्मुखो वामदृष्टी प्रत्यङ्मुखो धोदृष्टिः द
क्षिणेते मुखाः दक्षिणदृष्टयः इति व्याचष्ट तत्र मूल्यं चिंत्यं विरोधवत्तादवस्थ्यं च वर्णरूपगुणोपेतान् मात्स्यावाहा ।
येत्तु तोयम् मात्स्ये [illegible] हि विप्रकथिते कृत्वा ब्राह्मणवाचनं अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान् १ देवानां तत्र सं
स्थाप्याधिदेवा [illegible] आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः २ विष्णुधर्मोत्तरे अतः परं प्रवक्ष्यामि योदेवो
यो ग्रहः स्मृतः अग्निरर्कः स्मृतः सोमो वरुणः परिकीर्तितः १ अंगारकः कुमारश्च बुधश्च भगवान् हरिः बृहस्पतिः स्मृ
तः शक्रः शुक्रो देवी च पार्वती २ प्रजापतिः शनिश्चैव राहुर्ज्ञेयो गणाधिपः विश्वकर्मा स्मृतः केतुर्ये ग्रहास्ते सुराः स्मृताः
३ अत एव [illegible] दिलिंगका मंत्राः सूर्यादिस्थापने उक्ताः स्कांदे अग्निं दूतं दिनेशाय सूर्याया [illegible] तद्वत्यपि स्योना पृथिवी भो
म्यपरं दधिविः [illegible] धायच १ इंद्र आ मा सुरे ज्योतिः सिताय च प्रजापतेति सौराय आयं गौरीति राहवे २ केतवे ब्रह्मजज्ञानं खे
खे मंत्रैः प्रतिष्ठिताः एतेषां चैव मंत्राणां मात्स्यावाहयेत्तान् ३ इदं सुक्ताभिर्व्याहृतिभिर्वाहने विकल्पः मदनस्त्वावा
ज्यापसुक्तं २

ग्रो म हृनस्थापनयोर्भेवाख्यात्व तिभिरावाहनं एतैर्मंत्रैः स्थापनीमेपूचे पारिजाते वामनस्तुप्रणवंत्वादितः कृत्वाभूर्भुवः स्वःन
१२ मेःपूर्व चतुर्थ्यर्नामसंपुक्तंनमस्कारांतयोजितं १ एषमंत्रः समाख्यातोग्रहपूजाविधायकः अनेनावाहनंकुर्यादनेनैव
विसर्जनं भूसूत्रे अत्र आवाहनवाक्येषु विशेषमाह वौधायनः किरीटिनंपद्मासनंपद्मकरं पद्मगर्भसमद्युतिंसप्ता
श्वंसप्तरज्जुंकलिंगदेशजंकाश्यपगोत्रंविश्वामित्रर्षत्रिष्टुप्छंदसंरक्तांबरधरंरक्तामरणभूषितंरक्तगंधानुलेपनंर
क्तछत्रध्वजपताकोपशोभितंमुकुटकेयूरमणिशोभितंआरुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलप्रविष्टमधि
देवताप्रत्यधिदेवतेश्वरसहितंरक्तवृत्तमंडलेपूर्वमुखमादित्यमावाहयामि १ किरीटिनंरक्तमाल्यांबरंरक्त
भूलधरंचतुर्भुजंमेषगमनमवंतिदेशजंवाशिष्ठगोत्रजंजमदग्न्यार्षंजगतीछंदसंरक्तांबरधरंरक्ताभरणभूषितंर
माल्यानुलेपनंरक्तछत्रध्वजपताकिनंमुकुटकेयूरमणिशोभिमध्यदलाग्रेषुक्रमान्यसेत् इंद्रादिलोकपालांश्चतत्तन्मंत्रै
सपूजयेत् १ विनायकंतथादुर्गांवायुमाकाशमेवच आवाहयेद्ग्राहृतिभिस्तथैवाश्विकुमारकौ २ एतेचविनायकाद्याः
पंचग्रहेभ्यउत्तरतःस्थाप्याः इतिसांप्रदायिकाः दक्षिणापश्चिमवायव्योत्तरपूर्वेषुयथाक्रममित्यन्येएक्रमंदक्षिणेशानांतु
तरस्यांयथाक्रमंगणेशोदुर्गावायुश्चराहुकेत्वोश्चपश्चिमे १ आकाशमश्विनौचेतिपंचैतान्स्थापयेद्बुधः इतिसंग्रहानुसा

रेखोत्ति पितामहश्चरणाः रूपनारायणश्च स्कांदे उत्तरे शनिसूर्याभ्यां गुरुकेतोश्च दक्षिणे गणाधिपं प्रतिष्ठाप्य सर्वदेवनम
स्कृतं १ रविशनिकेतुगुरूणामध इति फलितोर्थः विनायकपदमुपलक्षणं तेन दुर्गादयोप्यत्रैव स्थाप्या इति केचित् चं
दनादि नियमस्तत्रैव दिवाकरकुजाभ्यां हि दापयेद्रक्तचंदनं चंद्रे च भार्गवे चैव सितवर्णं प्रदापयेत् १ कुंकुमेन तु संयुक्तं
चंद्रं जीव सौम्ययोः अगरुश्चंदनं दद्याद्राहुकेत्वर्कजेषु च २ ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् रवेः कुंदुरु
कं धूपं [illegible] शिमस्तु [illegible] ३ भौमे सर्ज्जरसं चैव अगरुं च बुधे स्मृतं सिल्हकं गुरवे दद्याच्छुक्रे विल्वागुरुस्तथा ४ गु
ग्गुलं मंदे चाज्ययुक्तं [illegible] केतवे ५ कुंदुरुकः सल्लकीनिर्यासः सिल्हकं सिल्हा इति मध्यदेशे प्रसिद्धं विल्वागुरुः म
विल्वफलनिर्यासः सहितः [illegible] मंदचारः शनिः उद्दीप्यस्वेति मंत्रेणादीपं दद्यात् द्वितः विहितगंधधूपानामसंभवे तु पा
तवल्लयः पेयामि ५ किरीटिनं पीतवर्णं चतुर्भुजं दंडिनं वरदं साक्षसूत्रकमंडलुं सिंधुदेशजं आंगिरसगोत्रं वाशिष्ठं अनु
ष्टुं दं [illegible] वरधरं पीतांबरभूषितं पीतपीतगंधानुलेपनं पीतछत्रध्वजपताकिनं सुकूटके स्थम
[illegible] मारुह्य रथं दिव्यं मेरुप्रदक्षिणं कुर्वाणं ग्रहमंडले प्रविष्टमधिदेवतेंद्रसहितं प्रत्यधिदेवता ब्रह्मसहितं पीत
दीर्घचतुरस्रमंडले उदङ्मुखं गुरुमावाहयामि ६ किरीटिनं [illegible] इंद्रनीलसमद्युतिं शूलधरं वरदं [illegible] प्रवाहने सवाणवाणास

शां.म नधरं सौराष्ट्र देशजं काश्यपगोत्रं जम्भृग्वार्षेगायत्रीछंदसं कृष्णांबरधरं कृष्णाभरणभूषितं कृष्णगंधानुलेपनं कृष्णछत्रध्व
१३ जपताकिनं मुकुटकेयूरमणिशोभितं मारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवता प्रजापतिस
हितं प्रत्यधिदेवता यमसहितं कृष्णधनुर्मंडले प्रत्यङ्मुखं शनैश्चरमावाहयामि ७ किरीटेनकरालवदनं खड्गचर्मशू
लधरं सिंहासनस्थं पूर्वदेशजं पैठीनसिगोत्रं मांगिरसार्षमनुष्टुप्छंदसं कृष्णांबरधरं कृष्णाभरणभूषितं कृष्णगंधानुलेप
नं कृष्णछत्रं ध्वजपताकिनं मुकुटकेयूरमणिशोभितं मारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेव
ता सर्पसहितं प्रत्यधिदेवता कालसहितं कृष्णशूर्पमंडले दक्षिणामुखं राहुमावाहयामि ८ धूम्रान् द्विबाहून् पाशधरा
न् विकृताननान् गृध्रवाहनान् किरीटिनो मध्यदेशजान् जैमिनिगोत्रजान् गौतमार्षान् गायत्रीछंदसः चित्रांबरधरान् चि
त्राभरणभूषितान् चित्रगंधानुलेपनान् कृष्णपिंगध्वजपताकिनो मुकुटकेयूरमणिशोभितानारुह्य रथं दिव्यं मेरुं प्रदक्षि
णीकुर्वाणान् ग्रहमंडले प्रविष्टान् अधिदेवता ब्रह्मसहितान् प्रत्यधिदेवता चित्रगुप्तसहितान् कृष्णपिंगध्वजमंडले
दक्षिणाभिमुखान् केतून् आवाहयामि ९ स्कांदे ईश्वरं भास्करे विंद्यादुमां विंद्यान्निशाकरे स्कंदमंगारके विंद्याद्बुधे नारायणं
त्रिदुः गुरौ वेदनिधिं विंद्याच्छुक्रे शक्रो विधीयते शनैश्चरे यमं विंद्याद्राहौ कालं तथैव च २ चित्रगुप्तोधिपः केतोरित्येते

ग्रहदेवताः ३ वेदनिधिर्ब्रह्मा तत्रैव वक्ष्येस्थानानिदेवानामीश्वरादियथाक्रमं सूर्य्यस्यैवोत्तरेशंभुमुमांसोमस्यदक्षिणे १
स्कंदमंगारकस्यैवदक्षिणस्यांनिवेशयेत् सौम्यात्पश्चिमतोविष्णुंब्रह्माजीवस्यपूर्वतः २ इंद्रमैन्द्र्यांसिताद्दिक्ष्विमंदादाग्नेय
तोयमं राहोः पूर्वोत्तरे कालंसर्वभूतभयावहं ३ केतोर्नैरृतदिग्भागेचित्रगुप्तंनिधापयेत् ३ स्कंदे अतस्थापनेमंत्राश्च
क्रमशोऽनुपूर्वशः ईश्वरंत्र्यंबकंचेति श्रीश्चतेचेतिपार्वती १ यदक्रंदेतिचस्कंदं विष्णुविष्णोरराडिति आब्रह्ममितिब्र
ह्माणंसजोषेंद्रेतिवासवं २ यमायत्वेतिचयमंकालंकालकार्षे । तिमंत्रतः चित्रावस्वितिमंत्रेणचित्रगुप्तंनिधापयेत् ३
त्र्यग्निरापःक्षितिविष्णुरिंद्रश्चैंद्री प्रजापतिः सर्पाब्रह्माचनिर्दिष्टा अधिदेवायथाक्रमं ४ अग्निंदूतमितित्वग्नेर्वरुणास्यउदु
त्तमंस्योनापृथिवीमेदिन्याइदंविष्णुस्तुविष्णवे ५ इंद्रायेंदोइतींद्रस्योत्तानपर्णेशाविस्थितौ प्रजापतेंप्रजेशस्यएषब्रह्मे
तिवैविधिः ६ मंत्रोनमोस्तुसर्पेभ्यः सर्पाणांस्थापनेमतः ग्रहदेवाधिदेवानांनैवेद्यंकुसुमानि च ७ ग्रहवच्चासनेदानंस्था
पनेचानुपूर्वशः अत्रसूर्यादयोग्रहाईश्वरादयोदेवाः आग्न्यादयोधिदेवाः तत्रेश्वरादिदेवानांसूर्यस्यैवोत्तरेशंभुमित्या
दिनापूर्वस्यस्थानान्युक्तानि अग्न्याद्यधिदेवास्तुग्रहदेवयोर्मध्येस्थाप्याः तथाचमदनरत्नेगोभिलवशिष्ठौ ग्रहदेवतयो
र्मध्येऽधिदेवान्निधापयेत् तत्रैवसंग्रहेतु ईश्वरादयोदेवा अधिदेवतात्वेनव्यवहृता अग्न्यादयस्तुप्रत्यधिदेवतात्वेन ते

शां.म. योस्थानांतरं चोक्तं अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् १ तत्रैव वक्ष्यसि श्रोये
२४ तु देवतानां स्थानांतरं क्वचिन्मंत्रांतरं चोक्तं रुद्रं त्र्यंबकमंत्रेण रवेरुत्तरतो न्यसेत् सोमस्याग्रे पदिभागे श्री श्वेते नकात्मजां
यदक्षं देति भौमस्य स्कंदं याम्ये प्रदापयेत् विष्णुं विष्णोरराटे तु यजेत्पूर्वे बुधस्य तु २ गुरोरुत्तरतो ब्रह्मा ब्रह्मेति मंत्रतः
सजोषं इंद्रेति शुक्रस्य प्राच्यां शक्रं निधापयेत् ३ शनेः पश्चिमतः स्थाप्यो यमायत्वं च यमः काषिरसीति मंत्रेण राहोः का
लं तत्रोत्तरे ४ चित्रगुप्तं तु केतूनां चित्रावसेति नैर्ऋते ग्रहाश्च देवताः ख्याताः प्रत्युधातोऽधिदेवताः ५ अग्निरापो धरा वि
ष्णुरिंद्र इंद्राणी प्रजापतिः सर्पा ब्रह्म च निर्दिष्टा अधिदेवा यथाक्रमं ६ ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् एतानि चवा
शिष्टीयवक्तव्यानि कैश्चिन्नाद्रियंते पारिजातपद्मप्राग्दलमारूढमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टम
धिदेवतां भूमिसहितं प्रत्यधिदेवतास्कंदसहितं त्रिकोणरक्तमंडले दक्षिणामुखमंगारकमावाहयामि २ किरीटिनं श्वे
तवर्णं चतुर्भुजं दंडिनं वरदं कांक्षसाक्षसूत्रकमंडलुं कीकटदेशजं भार्गवगोत्रजं शौनकार्षेयं पतितच्छदं श्वेतांबरधरं श्वेता
भरणभूषितं गंधानुलेपनं श्वेतच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारूढं रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्र
हमंडलं प्रविष्टमधिदेवतेंद्राणीसहितं प्रत्यधिदेवेंद्रसहितं शुक्लं पंचकोणमंडले प्राङ्मुखं भगवंतं शुक्रमावाहयामि ३

किरीटिनं श्वेतांबरधरं दशाश्वं श्वेतभूषणं पाशपाणिं द्विबाहुं यमुनादेशजं मन्त्रिगोत्रमात्रेयार्षमनुष्टुप्छंदसं श्वेतांबरध
रं श्वेताभरणभूषितं श्वेतगंधानुलेपनं श्वेतछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारूढरथं दिव्यमेरुं प्रदक्षिणी
कुर्वाणं ग्रहमंडलप्रविष्टमधिदेवताप्सहितं प्रत्यधिदेवतोमासहितं चतुरस्रमंडलं प्रत्यङ्मुखं सोममावाहयामि ४
किरीटिनं पीतमाल्यांबरधरं पीतवर्णं कर्णिकारसमद्युतिं खड्गचर्मगदापाणिं सिंहस्थं वरदं मगधदेशजं मन्त्रिगोत्रजं भा
रद्वाजार्षं जगद्धर्तोष्टुंछंदसं पीतांबरधरं पीताभरणभूषितं पीतगंधानुलेपनं पीतछत्रध्वजपताकिनं मुकुटकेयूरमणि
शोभितमारूढरथं दिव्यमेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवताविष्णुसहितं प्रत्यधिदेवताविष्णुसहितं
पीतवाणामंडले दक्षिणामुखं बुधमावाहयावर्णप्रदेयानि वासांसि कुसुमानि च गंधांश्च वल्लपश्चैव धूपो देयश्च गुग्गुलुः
१ स्कांदे गुडोदनं रवेर्देयात्सोमाय घृतपायसं लोहिताय हविष्यान्नं बुधाय क्षीरशाष्टिकं १ दध्योदनं गुरोर्देयाच्छुक्राय
च घृतोदनं मिश्रितं तिलमाषैश्च नैवेद्यं च शनैश्चरे २ राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं तथा चित्रौदने तिलतंदुलभ
मिश्रं स्याद्रजाक्षीरं च शोणितं कर्णनासाग्रहीतस्याद्देत्तच्चित्रौदनं स्मृतमिति दामोदरः १ रत्ते रेवद्रव्यैर्ब्राह्मणा अपि मो
ज्यान्नथा च याज्ञवल्क्यः गुडोदनं हविष्यं पायसं च क्षीरषाष्टिकं दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च दद्याद्ग्रहक्रमादे

निर्लिप्येभ्योभोजनंबुधः २ शक्तितोवायथालाभंसंत्वस्यविधिपूर्वकं ३ तच्छिष्टः उपचाराशिास्तुर्वैषामपिस्युक्ताक्षतैः सदा
गंधाभावेस्मुल्कगंधपुष्पाभावेस्मुगंधकं १ धूपाभावेगुग्गुलः स्याद्द्रव्याभावेतुमिश्रकं पंचामृतगवामेवमिश्रवर्तिकदाचने
ति मात्स्येप्रागुत्तरेशान्तस्माद्वद्ध्यक्षतविभूषितं चूतपल्लवसंयुक्तंफलवल्लपुगान्वितं १ पंचरत्नसमायुक्तंपंचभंगयुतं
तथा स्थापयेद्व्रणाकुंभंवरुणंतत्रविन्यसेत् २ गंगाद्याः सरितः सर्वाः समुद्राश्वसरांसिच गजाश्वरथ्यावल्मीकासंग
माद्ध्रदगोकुलात् ३ मृदमानीयविप्रेंद्र सर्वौषधिसमन्वितं स्नानार्थंविन्यसेत्तत्रयजमानस्यधर्मवित् ४ याज्ञवल्क्यः
अर्कः पलाशः खदिर अपामार्गोथपिप्पलः उदुंबरः शमीदूर्वाकुशाश्वसमिधः क्रमात् १ ईश्वरादिदेवानांस्वस्वग्र
हसमिद्भिरेवहोमः हेमाद्रौदेवीपुराणे गणाधिपतयेदेया प्रथमान्तुवराहुतिः अन्यथाविफलंविसमवतीहनसंशयइति
१ आकल्लापनः जुहुयात्समिदन्नाज्येनाभिक्रमैर्यथाक्रममिति समित्सुविशेषमाह याज्ञवल्क्यः होतव्यामधुसर्पिभ्यां
दध्नाक्षीरेणवायुताइतितिनचात्रसंप्रतिपन्नदेवताकानेकद्रव्यायामेकैवाहृतिः सान्नाय्यवदितिवाच्यं आदौतुसमि
दन्नाज्यैपृथगष्टोत्तरशतमितिवाशिष्टात् अन्यत्रापिसंप्रतिपन्नदेवताकेस्मार्तकर्मण्यनेकद्रव्यकेपृथगेवहोमइ
तिसांप्रदायिकाः वहुस्रुकर्मसुप्रापोवचनात्स्यपेवंस्कांदे आकृष्णेनसहस्रांशोरिमंदेवातथैवदवे अग्निर्मूर्धेतिभौमा

पत उद्बुध्यस्वबुधायच १ बृहस्पतेतिचगुरोः शुक्रायान्नात्परिस्रुतः शनैश्चरस्यमंत्रोयंशन्नोदेवीरुदाहृतः २ कयानइति
राहोश्चकेतुंकृण्वन्स्तुकेतवे ३ नात्स्य आवोराजेति रुद्रस्यबलिहोमंसमाचरेत् आपोहिष्ठेत्युमायास्तुस्योनेति
स्वाभिन्नक्षया १ विष्णोरिदंविष्णुरितित्वमित्स्येतिस्वयंभुवः इंद्रमिद्देवतातयइतींद्रस्यप्रकीर्तितः २ तथायमस्यव
यमोस्तिहोमः प्रकीर्तितः कालस्यब्रह्मयज्ञानमितिमंत्रः प्रकीर्तितः ३ चित्रगुप्तस्यचाज्ञातमितिपौराणिका विदुः
अग्निंदूतंवृणीमहे इतिवन्हेरुदाहृतः ४ उदुत्तमंवरुणेति अपांमंत्रः प्रकीर्तितः भूमेः पृथिव्यांतरिक्षमिति वेदेषु
पठ्यते ५ सहस्रशीर्षापुरुषइतिविष्णोरुदाहृतः इंद्रायेंद्रोमरुत्वतइतिशक्रस्य शस्यते ६ उत्तानपर्णेसुभगेइतिशच्या
समाचरेत् प्रजापतेः पुनर्होमंप्रजापतइतिस्मृतः ७ नमोस्तुसर्पेभ्यइति सर्पाणांमंत्रउच्यते एषब्रह्मापऋत्विज इति
तिब्रह्मणस्तुदाहृतः ८ विनायकस्यचानूनइतिमंत्रोबुधैः स्मृतः जातवेदसेसुनवामदुर्गामंत्रोत्रउच्यते ९ पूर्णाहुति
श्चमूर्धानंदिवइत्यभिपातयेत् १० स्कांदेनैवविशेषंहुत्वाचहोममंत्रादनंतरं अथाव्याहृतिभिर्हुत्वा एकैकस्यपयाः
क्रमं १ अष्टोत्तरंचसाहस्रंशतमष्टाधिकंतथा अष्टाविंशतिरष्टौवाएकैकस्यतुहोमयेत् २ होतव्यंचघृतंतत्रचरुंलं
स्वाष्टिकंपुनः मंत्रैर्दशाहुतिर्हुत्वा होमोव्याहृतिभिः स्मृतः ३ अथवा अप्यवेत्सर्पः गृहीत्वातामथोविकोस्मितिवत्स

शां०म० दनसिद्ध्यर्थेत्सेवयथापाठः ततन्मंत्राणामाहुतीनांचपरस्परंविकल्पः अष्टोत्तरसहस्रादिसंख्यातुपक्षद्वयेपिनैवेत्या

२६ शेषहोम त्तुशाखाविशेषपइत्यपिसएवलक्षादिकः पुनर्व्याहृतिभिर्होमोमंत्रैर्दशाहुतीर्हुत्वास्मृतइत्यन्वयः मंत्रै

र्हमंत्रैर्व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्च तातचरणास्तु अथव्याहृतिभिर्हुत्वेति पृथग्वाक्यं एकैकस्यैतु प्रतिदैव

तमष्टादिसंख्यान्वयार्थ एकैकस्यतुहोमयेदित्येकैकपदंतु चर्वादिद्रव्यपरंनदेवतापरं अस्मिन्नेवहोमेघृतचरुवि

धिः सेलक्षादिकइत्येततु अथव्याहृतिभिर्हुत्वेति विहितेहोमेलक्षादिसंख्याविध्यर्थंमंत्रैरित्यादितुचरुहोमोत्तरं

सोमंराजानमितिमंत्रेणयथाप्रकृतिस्विष्टकृद्धुत्वासूर्यादिमंत्रैर्दशाहुतिः प्रतिदैवतंलक्षहोमादिद्रव्येणहुत्वा व्याहृ

तिभिर्लक्षादिहोमः कार्यइत्याहुः यद्वाघृतमद्रव्येणग्रहादिभ्यः प्रत्येकंदशाहुतीस्ततन्मंत्रैर्हुत्वातेनैवद्रव्येणव्यस्त

समस्तव्याहृतिभिः पुनर्लक्षंकोटिमन्यतमसंख्यया जुहुयादितिहेमाद्रिमदनौ तानिचद्रव्याणिदेवीपुराणे यवव्रीहि

घृतक्षीरैस्तिलकंगुप्रमासिकाः पंकजोशीरविल्वार्कदलाहोमेप्रकीर्तिताः १ उदङ्मुखाः प्रङ्मुखावाकुर्युर्ब्राह्मणापुंब्रा

ह्मणापुंगवाः मंत्रवंतश्चकर्तव्याः चत्वः प्रतिदैवतं २ हुत्वाचतांश्चरून्सम्यक्ततोहोमंसमारभेत् ३ चर्वादिकंचघृ

ताक्तंचहोतव्यं होतव्यंचघृताभ्यक्तंचचरुभक्ष्यादिकंपुनरितिमात्स्यात् भक्ष्यंद्राक्षादिचरुर्नैवेद्यशिष्टोगुडोदनादि ता

शां·म· सैः ४ अभिषेकमंत्राः प्रयोगवक्ष्यंते वशिष्टः स्वस्तिकंकल्पयेत्पश्चात्कुंडस्येशानभागतः ३ यजमानाभिषेकार्थंतत्र
३७ भद्रासनंन्यसेत् प्राङ्मुखस्योपविष्टस्ययजमानस्यतत्रच ४ अभिषेकंततः कुर्युः साचार्याःषोडशर्त्विजः त्रिविधैर्मंग
लैर्घोषैः सूतमागधबंदिभिः सह ५ ततस्तस्याभिःषिक्तस्यरक्षार्थंवलिमुत्क्षिपेत् दिग्विदिक्षुविचित्रान्नैर्दीपैर्नीराजये
त्ततः शुक्लमाल्यांवरधरःशुक्लगंधानुलेपनः १ ततोमंडलमागत्यध्यायेदग्निंग्रहान्सुरान् प्रत्येकंप्रतिमंत्रैश्चदद्यात्सु
प्योत्पलिं ततः २ इतिवामनः आचार्यप्रभृतिभ्यश्चग्रहार्चनफलंततः समिदाज्यचरूणांचतिलहोमफलंवयत् १
ब्रह्मत्वेकुंभपूजायांचार्चनस्यफलंचयत् गणपक्षेत्रपाश्रीशादुर्गादेव्यंगदेवताः २ तासांजपफलंसम्यक्गृह्णीयाज
लपूर्वकं एतानिचवामनवचांसिनिर्मूलानिइतिपितामहचरणाः वाशिष्टगोभिलवचसामपिकेचिदाहुः वशिष्टः
ततोजप्यादीन्जुहुयात् पूर्णाहुतिमथाचरेत् तत्रैवमंत्रेणसप्तते अग्नइतिपूर्णाहुतिंचरेत् अग्निपुराणे मूर्द्धानं
दिमंत्रेणसम्यक्वसोर्धारया दद्यात्स्थापपूर्णांवैनोपविश्यकदाचनेति मत्स्ये पूर्णाहुतिंचमूर्द्धानंदिवइत्यभियातये
त् अन्यभिन्नशाखागतेकादशाष्टादशाकपालभेदैर्ऐंद्राग्न्ये कवदनेकमंत्रयुक्तायाअनेकस्मृत्युक्तायाअग्निपूर्णा
हुतिरेकतान्मंत्राणांविकल्पः उपांशुयाजइवशाखाभेदभिन्नानांयाज्यानुवाक्यानांसमुच्चयेनतुपठंति वसोर्द्धारालघुत्वे

होमेनास्ति प्रमाणाभावात् ततः शुक्लांबरधरः शुक्लगंधानुलेपनः सर्वौषधैः सर्वगंधैः स्नापितो वेदपुंगवैः १ यजमानः
सपत्नीकः ऋत्विजः स्नान्समाहितः दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः २ सूर्याय कपिलां धेनुं दद्याच्छंखं तथेंदवे
रक्तं धुरंधरं दद्याद्भौमाय कुदाधिकं ३ बुधाय जातरूपं तु गुरवे पीतवाससी श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ४
आयसं राहवे दद्यात्केतवे छागमुत्तमं सुवर्णेन समाकार्या यजमानेन दक्षिणा ५ बुधप्रीत्यर्थदेयहेम्नासह सर्वा मूल्य
तः समा इति केचित् अस्मिन्पक्षे षोडशमाषविशिष्टहेमवाचि सुवर्णपदासामंजस्यापत्तेः स्यादशसुवर्णमूल्याः प्रत्ये
कमिति अपरे वहुल्पमूल्येषु तथा हेमापि देयं यथा सर्वाः प्रत्येकं दशमाषसुवर्णेन समा भवंतीति तु सम्यक् सर्वेषामप्य
वाप्राविगुरुर्वा येन तुष्यति स्वमंत्रेण प्रदातव्याः सर्वाः सर्वत्र दक्षिणाः १ स्कांदे केतवे छागमांसानि सर्वेषामेव कांच
नमिति तत्रैव यस्तु पीडाकरो नित्यं स्वल्पवित्तस्य वा ग्रहः तमेव पूजयेद्भक्त्या दक्षिणाभिः स्वशक्तितः १ दानोद्योते भ
आश्वलायनः यथाशक्ति ततो विप्रान् ऋत्विजश्चेतरानपि एकमेकाहुतौ विप्रं होमे तन्त्रेण भोजयेत् १ असामर्थ्ये
समाश्वासिनि विप्रमेकं प्रत्याहुतौ सहस्रस्य हुते चैवैकं जघन्यो विप्रभोजयेत् २ तत्रैव तस्मादातुमशक्तोऽपि दक्षिणां
चान्नमेव वाजपेयः प्रणामैः स्तोत्रैश्च तोषयेत् तर्पयेद्गुरुं ३ स्कांदे येयाग्रहो द्विजस्त्वा द्विद्विधिज्ञो वेदपारगः तोषयन्म

शां·म दृवस्त्राद्यैस्तुष्टमेनंविसर्जयेत् १ अन्नहीनोदहेद्राष्ट्रंमंत्रहीनस्त्वृत्विजः यजमानमदक्षिणपोनास्तियज्ञसमोरि
२७ पुः २ तत्रैव मयासमन्वितंयंत्रयंत्रेणाप्रतिहन्यते एवसमुत्थितंघोरंशीघ्रंशांत्याविनश्यति १ अहिंसकस्यदांतस्य
धर्मार्जितधनस्यच नित्यंचनियमस्थस्यसदासानुग्रहाग्रहाः २ ग्रहागावोनरेंद्राश्चब्राह्मणाश्चविशेषतः पूजि
ताः पूजयंत्येतेनिर्दहंत्यवमानिताः ३ ग्रहाणामिदमातिथ्यंकुर्यात्संवत्सरादपि आरोग्यबलसंपन्नोजीवेच्चशर
दांशतं ४ मात्स्ये एवंसमग्रान्निध्याधसर्वान्देवान्विसर्जयेत् तत्रमंत्रः यांतुदेवगणाः सर्वेपूजामादायपार्थिवी इ
ष्टकामप्रदानायपुनरागमनायच १ भविष्योत्तरे ततः समाप्तेयज्ञेतुकारयेत्तुमहोत्सवं शंखतूर्यनिनादेनब्रह्मघो
षरवेणच १ मात्स्ये अनेनविधिनायस्तुग्रहपूजांसमारभेत् सर्वान्कामानवाप्नोतिप्रेत्यस्वर्गेमहीयते १ सदैवायुत
होमोयंनवग्रहमखः स्मृतः विवाहोत्सवयज्ञेषुप्रतिष्ठादिषुकर्मसु २ निर्विघ्नार्थंमुनिश्रेष्ठतथोद्वेगाद्भुतेषुच वश्या
कर्माभिचारादौतथैवोच्चाटनादिके ३ नवग्रहमुखंकृत्वाततः काम्यंसमारभेत् अन्यथाफलदंपुंसांनकाम्यंजायते
कचित् ४ तस्मादयुतहोमस्यविधानंतुसमारभेत् ४ विवाहेत्यादिनाचविवाहादिषुकाम्येषुचकर्मस्वंगत्वमुक्तं आ
वग्रहस्वरूपवर्णदेशगोत्राग्निस्थानमुखाकारस्थापनहोममंत्रचंदनधूपनैवेद्यसमिद्दक्षिणाधिदेवताप्रत्यधिदेव

तापत्त्यधिदैवतोपदेशकवाक्येषु ग्रहणास्वरूपनिर्देशस्थापनहोममन्त्रोपदेशकवाक्येषु चाधिदैवताविनायकादि
पञ्चलोकपालानामनेकस्मृतिपुराणभेदेन भूयो विसंवादादिभिरनेकैः पर्यायशब्दैः रूपस्थितेर्नानैकवेधशब्दनियमः ना
पि मन्त्रवर्णैनैकशब्दोपस्थितिः शब्दविशेषैर्देवता अनुपस्थितत्वात् कृतयामन्त्रविनियोगेन मन्त्राणां देवताप्रापकत्वायो
गात् तेषां बाहुल्येनास्पष्टलिंगत्वाच्च अतो दक्षयागादिषु स्वरूपादिनिर्देशकस्मृतिमन्त्रवर्णोपस्थितिशब्दानामन्यतमे
न शब्देनोद्देशग्रहणं नमिति शिष्टाचारोप्येवं अत एवस्मार्ते नित्यकर्मणि केषुतु होमे ग्निवायुसूर्यप्रजापतयः एव देवताः न ग्रहा
णं ग्रहादिदेवतत्वप्रकाशकत्वेन विनियोगाभावात् अत एव पारिजाते ॐ भूर्भुवः स्वश्चेति तिस्रो व्याहृतयो जपेत् अभिश्च हो
मे तिस्रभिश्च तूर्ष्णीस्यात्समस्ततइति समस्ताभिरेव होमः सवाग्निवायुसूर्यदैवत्यइति तु मदनः सर्वथाऽत इति होमे न ग्रहा
णां देवता इति प्रधानं चात्र ग्रहपूजा तद्धोमो युतहोमादिश्च 'श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् इत्यादिना तत्पू
जातद्धोमयोः फलसंबंधात् ग्रहयज्ञाख्ये धेसुत्वाम प्रथमोयुतहोम इत्यादिना युतलक्षकोटिहोमानां ग्रहयज्ञविशेषत्वेनो
पक्रमात् तस्मादयुतहोमस्य विधाने तु समाचरेदित्युपसंहाराच्च ग्रहार्यग्रहदेवत्यकर्मसमूहे प्राणभृत्तर्ठपंदूयातीतिव
च्छिंपक्षमवायेन ग्रहयज्ञशब्दः तातचरणास्त्वयुतहोमादिनामेव प्राधान्यं ग्रहहोमस्त्वंगमित्याहुः तदाशयं न जाने यो हि

ग्रं॰ म कामशब्देनफलसंबंधः श्रीकामः शांतिकामोवाग्रहयज्ञंसमाचरेदित्यादिः सत्तावद्ग्रहपूजाहोमयोरेवोचितः ग्रहसंबंधप्र
१९ त्येग्रहयज्ञशब्दस्यतन्नामत्वात् नचापुत्तहोमादीनांफलसंबंधेतत्प्रकरणपाठात् ग्रहपूजाहोमयोरंगत्वेतिवाच्यं वैपरी
त्वात् अपुत्तहोमादिशब्दानांग्रहयज्ञसमानाधिकरण्येनग्रहयज्ञनामत्वंनुलिंगसमवायेन नतदंगत्वेन आर्थवादि
कः फलसंबंधस्तु अनेनविधिनायस्तुग्रहपूजांसमाचरेत् सर्वान्कामानवाप्नोतिप्रेत्यस्वर्गेमहीयते इत्ययज्ञदेवपू
ज्ञा संगतिकरणदानेष्विति अनुशिष्टयोः पूजाहोमयोः सदैवापुत्तहोमीयमित्याद्युपक्रम्यनिर्विघ्नार्थमुनिश्रेष्ठ्रत्या
दिनांत्तुपुत्तहोमादीनामपिस्मृतिषुनुप्रायः आर्थवादिकमेवफलं अत्रकामशब्दोपनीतेफलेसत्यार्थवादिकंसंबध्यते
नवेत्तिनुविचारांतरं किंच याज्ञवल्क्यादिस्मृतिषुनतावदपुत्तहोमादीनांविधिर्नोप्यनुवादः अतोग्रहपूजाहोमयोःप्र
धान्यमाव्वेतत्रत्येतिकर्त्तव्यतासंबंधोनस्यात् अतोग्रहपूजाहोमयोरपिप्राधान्यंभाति अत्रएवंकश्चित्केवलग्रहमखेषु
तदंगकेषुचशांतिकादिकर्मस्वेकस्मृत्युक्तांगप्रधानादरेणास्मृत्यंतरोक्तप्रधानभूतापुत्तादिहोमंविनापिशास्त्रत्वात्तरोक्त
ग्रहयागांतराभ्यासांतरविनैकशास्त्रीयग्रहयागाभ्यासमात्राणामिवपूजाग्रहदेवत्यहोमयोरेवानुष्ठानंकथंचित्शिष्टा
नांसमंच्छते ग्रहपूजाहोमयोरंगत्वेत्वंगमात्रानुष्ठानमेवस्यात् अथग्रहादीनांलक्षणानि मात्स्ये पद्मासनःपद्मकरःप

रायपरितोषितः स्वप्ने ददौ निजं राज्यं स मे सौरिः प्रसीदतु ९ कोणं नीलांजनप्रख्यं मंदचेष्टाप्रसारिणं छायामार्तंडसंभूतं न
मस्यामि शनैश्चरं १० नमोर्कपुत्राय शनैश्चराय नीहारवर्णांजनमेचकाय श्रुत्वा रहस्यं भव कामदश्च फलप्रदो मे भव
सूर्यपुत्र ११ नमोस्तु प्रेतराजाय कृष्णदेहाय वै नमः शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने १२ य एभिर्नामभिः स्तौति त
स्य तुष्टिं ददात्यसौ तदीयं तु भयं तस्य स्वप्नेपि न भविष्यति १३ कोर्दे श्रावणे मासि संजाते शोभने शनिवासरे लोहस्यं
शनिं कृत्वा स्नाप्य पंचामृतेन वै १४ पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः नामभिः पूजयेदेतैः क्रमेणाग्रहं सज्जनं १५ को
णस्तु पिंगलो बभ्रुः कृष्णो रौद्रोंतको यमः शौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः १६ शन्नो देवीति सर्वत्र वैदिकेन व
हृजपेत् पूजयित्वा च नैवेद्यं ततः कुर्यात्क्रमेण तु १७ समाषभक्तं प्रथमे द्वितीये पायसं शुभं ततोपेत्वं विलीका यावत्तु
र्थपूरिका शुभा १८ अंविलीतक्रतंडुलपिष्टादिनिर्मितो लेख्य विशेषः ० इति शनिव्रतं ० अथ शनिस्तोत्रं ० ततः कृतांज
लिर्भूत्वा स्तुतिं चक्रे स बालकः पिप्पलादो द्विजः श्रेष्ठः प्रणिपत्य मुहुर्मुहुः १ नमस्ते कोणसंस्थाय पिंगलाय नमोस्तु ते
नमस्ते बभ्रुरूपाय कृष्णाय च नमोस्तु ते २ नमस्ते रौद्रदेहाय नमस्ते चांतकाय च नमस्ते यमसंज्ञाय नमस्ते सौरये विभो ३
नमस्ते मंदसंज्ञाय शनैश्चर नमोस्तु ते प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ४ शनैश्चर उवाच परितुष्टोस्मि ते वत्स स्तो

श्रा.सं. त्रेणानेनसांप्रतं वरं वरयभोवत्सयेनपश्यामिवांछितं ५ पिप्पलादउवाच अद्यप्रभृतिनोपीडाबालानांरविनंदन त्वयाका

४५ र्यामहाभागनस्वकीयाकथंचन ६ यावद्वर्षाष्टकंजातंममबाल्येनसूर्यज स्तोत्रेणानेनयोन्यस्त्वां ब्रूयात्स्मातरुपस्थितः॥

तस्यपीडानकर्त्तव्यात्वयाभास्करनंदन तस्यपीडानकर्त्तव्यादेयोलाभोमहाभुज अर्द्धाष्टमिकयायोगेतावकेसंस्थितेनरः ७

सार्द्धसप्तवर्षपर्यंतंद्वादशजन्मद्वितीयराशिभिर्यः शनैश्चरयोगः सोर्द्धाष्टमिकयोगइत्युच्यते ८ तववारेतुसंप्राप्तेयस्तिलान्

लोहसंयुतान् शक्त्याददातिनोतस्यपीडाकार्यात्वयाविभो ९ कृष्णांगांयस्तुविप्रायतवोद्देशेनयच्छति अर्द्धाष्टमिकयापी

डातस्यकार्यात्वयानघ १० शमीसमिद्भिर्होमोयंतवोद्देशेननिर्वपेत् तथाकृष्णतिलैश्चैवतुथाकृष्णानुलेपनैः ११ पूजांकरो

तियस्तुभ्यंधूपंवागुग्गुलंदहेत् कृष्णवस्त्रेणसंवेष्ट्यत्याज्यातस्यत्वयाव्यथा १२ सूतउवाच एवमुक्तःशनिस्तेनवाढमित्येवञ्ज

स्यच नारदसमनुज्ञायजगामनिजसंश्रयं १३ इतिशनैश्चरशान्तिः ० अथार्कविवाहः प्रयोगरत्नेतृतीयांमानुषीनैवचतुर्थी

यः समुद्वहेत् पुत्रपौत्रादिसंपन्नः कुटुंबीसाग्निकोनरः १ उद्वहेदितिसिध्यर्थंतृतीयांनकदाचन मोहादज्ञानतोवापियदिगच्छे

त्तुमानुषी २ नश्यत्येवनसंदेहोगर्गस्यवचनंयथेति तत्रैवसंग्रहे तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत् ३ चतुर्थ्यादि

विवाहार्थंतृतीयेर्कंसमुद्वहेत् आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे ४ शुभेदिनेवापूर्वाह्नेकुर्यादर्कविवाहकं व्यासःस्वा

त्वालंकृतवासास्तुरक्तगंधादिभूषितं ५ सपुष्पफलशाखैर्वा अर्कगुल्मं समाश्रयेत् सल्लक्षणेन संयुक्तं अर्कं संस्थाप्य यत्नतः ६
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्सुधीः अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् ७ नांदीश्राद्धं हिरण्येन अष्टवर्गान्प्रपूज
येत् पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ८ यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणं उष्णीषं गंधमाल्यादीन् वरायास्मै प्रदा
पयेत् ९ स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् बाह्ये ग्रामात्प्राच्यां वा सुपुष्पफलसंयुतं १० परीक्ष्य यत्नतो धस्तमस्थंडि
लादिपंथा विधि कुर्यादिति शेषः कृत्वार्कं पुरतस्तिष्ठन्प्रार्थयेत्तद्द्विजोत्तमः ११ त्रिलोकवासिन्सप्ताश्वच्छायया सहितो रवे तृ
तीयोद्वाहजं दोषं निवारय सुखं कुरु १२ तत्राध्यारोप्य देवेशं छायया सहितं रविं वस्त्रैर्माल्यैस्तथा गंधैः स्वमंत्रेणैव पूजयेत् १३
तत्रैव श्वेतवस्त्रेण तथा कार्पाससंततुभिः १४ गंधपुष्पैः समभ्यर्च्य तल्लिंगैः रभिषिंचयेत् १४ गुडोदनेन तु नैवेद्यं तांबूलं च समर्प
येत् आसः अर्कं प्रदक्षिणी कुर्वन् जपेन्मंत्रमिमं बुधः १५ मम प्रीतिकरा येयं मया सृष्टा पुरातनी अर्कजा ब्रह्मणा सृष्टा अस्मा
कं परिरक्षतु १६ पुनः प्रदक्षिणीकुर्यान्मंत्रेणानेन मंत्रवित् नमस्ते मंगले देवि नमः सवितुरात्मजे १७ त्राहि मां कृपया देवि प
त्नी त्वं मे इहागता अर्कं त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च १८ वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः तृतीयोद्वाह
जं पापं मृत्युं चाशु विनाशय १९ ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका २० गो

त्रंकाश्यपमित्युक्तं लोके लौकिकमाचरेत् सुमुहूर्ते निरीक्षेतु स्वस्तिसूक्तमुदीरयन् २१ आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विं
जैः अथाचार्यं समाहूय विधिनातम्मुखाश्रितां २२ परिगृह्य ततो होमं गर्गोक्तविधिनाचरेत् व्यासः अर्ककन्यामिमां विप्र यथाशक्ति
विभूषितां २३ गोत्रायशर्मणेतुभ्यं दत्तां विप्र समाश्रयेत् अंजल्यक्षत कर्माणि कृत्वार्ककरणपूर्वकं २४ यावत्संवाहृता सूत्रं ताव
दर्कं प्रवेष्टयेत् स्वशाखोक्तेन मंत्रेण गायत्र्यावाथवाजयेत् २५ पंचीकृत्य पुनः सूत्रं स्कंधेव भ्राति मन्त्रतः वृहत्सामेति मंत्रेणसू
त्रैरक्षां प्रकल्पयेत् २६ अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरतस्तथा कुंभांश्च निक्षिपेत्पश्चादाग्नेयादि चतुष्टये २७ सवस्त्रं प्रतिकुंभं
च त्रिसूत्रैर्गोवेष्टयेत् हरिद्रागंधसंयुक्तं पूरयेच्छीतलंजलं २८ प्रतिकुंभं महाविष्णुं संपूज्य परमेश्वरं पाद्यार्घ्यादि निवेद्या
तं कुर्यान्नाम्नैव मंत्रवित् २१ अत्र शौनकोक्तहोमप्रकारः ः०ः तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु अर्कविवाहं वक्ष्यामि शौ
नकोहं विधानतः १ अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् नांदीश्राद्धं प्रकुर्वीत स्थंडिलं च प्रकल्पयेत् २ अर्कमभ्य
र्च्य सौर्या च गंधपुष्पाक्षतादिभिः सौर्या सूर्यदेवत्यया ऋचा आकृष्णेनेत्यनया स्वयं वालंकृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ३
अर्कस्योत्तरदेशे तु समन्वारब्धस्तया एतयार्ककन्याया उल्लेखनादिकं कुर्यादाघारांतमतः परं ४ आज्याहुतिं च जुहुया
त्संगोभिरनपेक्षया कस्मै त्वा कामकामायेत्येतनयर्चा ततः परं ५ प्रस्ताभिश्च समस्ताभिस्ततश्च स्विष्टकृद्भवेत् परिषेचनपर्य

नमयाश्चेत्यादिकंक्रमात् प्रार्थनादिमंत्रादिविशेषमाहव्यासः पुनः प्रदक्षिणांकृत्वामंत्रमेतमुदीरयेत् यथाकृतमिदंकर्मस्थावरे
सुजरापुरा अर्कोपस्यानिनोदेहितत्सर्वंक्षंतुमर्हसि इत्युक्त्वाशांतिसूक्तानिजप्त्वातंविसृजेत्पुनः गोयुग्मंदक्षिणांदद्यादा
चार्यायचभक्तितः इतरेभ्यश्चविप्रेभ्योदक्षिणांचायिशक्तितः तत्सर्वंगुरवेदद्यादंतेपुण्याहमाचरेत् अथप्रयोगः तृती
यविवाहः स्वाग्दिनचतुष्टयाधिकव्यवहितेरविवारेशनिवारेहस्तनक्षत्रशुभेदिनांतरेवाग्रामात्प्राच्यामुदीच्यांवापुष्पफल
युताकादधस्तात्स्थंडिलेकृत्वार्कपश्चिमतउपविश्यमासपक्षाद्युल्लिख्यममतृतीयमानुषीविवाहजदोषापनुत्यर्थं अर्कविवा
हंकरिष्ये इतिसंकल्प्यगणेशपूजास्वस्तिवाचनमातृपूजनवृद्धिश्राद्धाचार्यवरणानिकुर्यात् तत्रवृद्धिश्राद्धेहेम्नः अथा
चार्येणपूजितोवरः त्रिलोकवासिन् सप्ताश्वछायपासहितोरवे तृतीयोद्वाहजंदोषंनिवारयसुखंकुर्वित्यर्कंसंप्रार्थ्यार्कं
आकृष्णेनेतिछायासहितंरविमावाह्यश्वेतवस्त्रसूत्राभ्यामावेष्ट्यसंपूज्यापोहिष्ठेत्यादिभिरभिरभिषिंच्यगुडोदनतां
बूलादिसमर्प्यप्रदक्षिणांकुर्वन्ममप्रीतिकरायेयंमयासृष्टापुरातनी अर्कजाब्राह्मणासृष्टाअस्माकंप्रतिरक्षत्विति
पठेत् द्वितीयप्रदक्षिणायांतु नमस्तेमंगलेदेविनमःसवितुरात्मजे॥ त्राहिमांकृपयादेविपत्नीत्वंमेइहागता अ
र्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः॥तृतीयोद्वाहजंपापंमृत्युंचाशुविना

श्रयेति. ततआचार्येणमासपक्षाद्युक्तिरव्यकाश्यपगोत्रामादित्यस्यपुत्रींसवितुःपौत्रींअर्कस्यप्रपौत्रीं [illegible] मुद्
त्के वरः स्वस्तिनइंद्रोवृद्धश्रवा इतिसूक्तंपठन्नर्केनिरीक्षेत ततआचार्योविप्रैःसहाशिषोदत्वामुकगोत्रायामुकशर्मणे
संप्रददे इत्युक्त्वाकन्यांदत्वार्ककन्यामिमांविप्रयथाशक्तिविभूषितां गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रयेतिपठेत् वर
स्तुप्रत्तोमेकामः समृद्ध्यतामितिप्रथमोधर्मोमे इतिद्वितीयां प्रश्रोइतितृतीयामिति त्रीनक्षतांजलीनर्कोपरिक्षिप्त्वाग्ना
यन्त्यापरिलेत्यादिनावापंचावृत्तासूत्रेणार्कमावेष्टयतत्सूत्रंपंचगुणंकृत्वार्कस्यस्कंधेवध्वा ।। वृहत्सामेतिरक्षांपरिकल्प्य।।
अर्कस्यदिक्षुविदिक्षुवशैकुंभान् संस्थाप्यवस्त्रेणत्रिसूत्रेणचावेष्ट्यहरिद्रागंधाद्यैःतःक्षिप्त्वातेषुनाम्नाविष्णुमावाह्यषोडशो
पचारैःसंपूज्यस्थंडिलेग्निंप्रतिष्ठाप्यआघाराववाज्येनेत्यंतमुक्त्वाप्रधानंवृहस्पतिनग्निवायुसूर्यप्रजापतिंचाज्येनशेषेणे
त्याद्युक्त्वाघारांते संगोभिरंगिरावृहस्पतिस्त्रिष्टुप् अर्कविवाहहोमेविनियोगः ॐ संगोभिरंगिरसोनक्षमाणोभगइवे।।
दर्यमणंनिनायजनेमित्रोनदंपतिअनक्तिवृहस्पतेवाजयाशूरिवाजौस्वाहा वृहस्पतयइदंनममेतित्सजेत् यस्मैत्वाक्षा
मद्देवोग्निस्त्रिष्टुप्विनियोगःप्राग्वत् ॐ यस्मैत्वाकाममकामायवयंसाम्राड्यजामहे तमस्मभ्यंकामंदत्वायथेदंघृतंपि।।
वस्वाहा अग्नयइदं ततोव्यस्तव्याहृतिभिर्हुत्वास्विष्टकृदादिकर्मशेषंसमाप्यार्कप्रदक्षिणीकृत्यमयाकृतमिदंकर्मस्थावरे

पूजरापुरा अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसीति प्रार्थ्याचार्यायगोयुग्ममन्येभ्यश्चविप्रेभ्योयथाशक्तिदक्षिणांदत्वा
शांतिसूक्तंजपित्वापूजोपकरणान्याचार्यायदत्वादिनचतुष्टयमग्निं कुंभांश्चरक्षेत कुंभेषुमहाविष्णुंपूजयेच्च पंचमदिन
कृसंवाह्ने चतुर्थेदिवसेततोत्पूर्ववत्तांप्रपूज्यचविसृज्यहोममग्निंचविधिनामानोपीपरा उद्वहेदन्यथानैवपुत्रपौत्रस
मृद्धिमान् इतिश्रीभट्टनीलकंठकृतेभास्करेशांतिमयूखेअर्कविवाहः अथरजोदर्शनशांति नारदः कुलीरसिंहवृषभेचापा
न्त्यनृयुक्कन्यातुलाघटाः राशयः शुभदास्त्रेयानारीणांप्रथमार्त्तवे कुलीरःकर्कटःचापधनुःअंत्योमीनःनृयुग्मिथुनंघटःकुं
भः स्मृतिचंद्रिकायां शुक्लपक्षेसुशीलास्यात्कृष्णेसाकुलटाभवेत् कृष्णस्यदशमीयावन्मध्यमंफलमादिशेत् तथात्रैव।।
अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि परिघस्यचपूर्वार्धेव्यतीपातेचवैधृतौ संध्यासूपप्लवेविष्ट्यामशुभंप्रथमार्त्तवं
रोगीपतिव्रतादुःखीपुत्रिणीभोगभोगिनी पतिव्रताक्लेशयुक्तासूर्यवारादिषुक्रमात् कश्यपस्तु अष्टमीषष्ठ्यमारिक्ताद्वा
दशीसंक्रमेदिवा वैधृतौचव्यतीपातेग्रहणेचंद्रसूर्ययोः विष्ट्यांसंध्यासुनिद्रायांदुर्भगाप्रथमार्त्तवे नक्षत्रफलमाहगर्गः।।
सुभगाचैवदुःशीलावंध्यापुत्रसमन्विता धर्मयुक्ताव्रतयोचपरसंतानमोदिनी सुपुत्राचैवदुःपुत्रापित्र्वेश्मरतासदा।दी
नाप्र ज्ञावतीचैवपुत्राढ्यापवित्रकारिणी साध्वीपतिव्रतानित्यासुपुत्राकष्टचारिणी स्वकर्मनिरताहिंसापुण्यापो

सं॰म॰ त्रादिसंयुता नित्यंधनकयासक्तापुत्रधान्यसमन्विता सूर्यार्थात्स्यागुणावतीदस्रर्क्षादेः क्रमात्फलं स्मृतिरत्ने शुभंचैवदुष्टू

४७ र्वान्हेमध्यान्हेमध्यमंफलं अपरान्हेतुवैधव्यंपूर्वरात्रेशुभंभवेत् मध्यरात्रेतुमध्यंस्यात्पररात्रेशुभान्विता कश्यपः मलिना

मंदवारेस्याद्दरिद्रावपितथैवचेति स्मृत्यंतरे मध्यान्हेतुभवेत्संध्यानिशीथेविधवाभवेत् तथा अमासंक्रांतिविष्ट्यावव्यती

पातेचवैधृतौ परिघस्यतुपूर्वार्द्धेषट्षट्घटिकातिगंडयोः व्याघातेनवशूलेतुनाड्यः पंचतुदर्शने वैधव्यमर्थहानिंचसुतना

शंमहद्भयं वैधव्यंशत्रुवृद्धिंचदारिद्र्यंक्षीणजीवनं तेजोहानिंसमापातिसदापुष्पवतीक्रमात् स्थानभेदेफलभेदमाह

सिष्टः ग्रामाद्बहिः परग्रामेचेत्स्याद्व्यभिचारिणी पतिव्रतापतिस्थानेसुशीलागृहमध्यके ग्राममध्येतुवृद्धिश्चविधवाच

दिगंबरा परागारेचदुःशीलाआपुष्पंजलसंनिधौ वनमध्येतुकंन्यायाधनधान्यसमृद्धिदा परागारइत्यनेनैवपितृगृह

निषिद्धं तथाचशिष्टाचारः विशेषनिषेधस्तुनदृश्यते तथा चंद्रेसद्गुणसंयुक्तेदेवराजमताच्छुभं शावाशौचेप्यशु

भमितिगुरवः वस्त्रफलमाहवसिष्टः सुभगाश्वेतवस्त्रास्यात् दृढवस्त्रापतिव्रता क्षौमवस्त्राक्षितीशास्यान्नववस्त्रासुस्ना

न्विता शुभ्रगाजीर्णवस्त्रास्याद्रोगिणीरक्तवाससा नीलांबरधरानारीविधवापुष्पितायदि मलिनांबरतोनारिदरिद्रा

स्याद्रजस्वला रजोबिंदुफलमाह सएव वस्त्रेस्युर्विषमारक्तबिंदवः पुत्रमाप्नुयात् समाश्चेत्कंन्यकाचेतिफलंस्यात्प्रथमार्त

यै देवराज्ञः संमार्जनीकाष्टतृणाभिश्शूर्पान् हस्ते दधाना कुलटाय दास्यात् तुल्योपभोगेन पतिस्थिता वेदृष्टे रजोभाग्यवतीतदा॥
त नारदः तीथ्यर्क्षवाराणि याश्चेत् दोषं फलं न निवारयेत् दोषाधिके गुणाल्पत्वे तत्तथापि न कारयेत् दोषाल्पत्वे गुणाधिक्ये॥
दोषं कर्म समाचरेत् निंद्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते तत्र शांतिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः प्रत्येकं शतमष्टौ च
गायत्र्याजुहुयात्ततः स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये भर्तातत्राभिगमनं वर्जयेत् शास्त्रदर्शनात् वसिष्ठोपि प्र
भूतदोषं यदि दृश्यते तत्पुष्पं ततः शांतिककर्मकार्यं विवर्जयेद्देवतदेकप्राप्यां यावद्रजोदर्शनं मंत्रयस्ते शौनकः आर्तवानां
तु नरोणां शांतिं वक्ष्यामि शौनकः तिथिवारर्क्षयोगेभ्यो लग्ने च स नवांशके ग्रहेभ्यो दुःस्थितेभ्यः श्च तत्तद्दोषक्षयाय च अ
न्यपुत्रपुत्र्यलाभाय दंपत्योरभिवृद्धये पंचमेन्हि चतुर्थे वा गृहयज्ञपुरस्सरं तस्मिन्नहनि कर्तव्यमृतुहोमविधानतः आ
चार्यं वरयेत्तावत् भुवनेश्वरितुष्टये होमार्थं च जपार्थं च वरयेदृत्विजो बहून् यजमानो द्विजैः सार्धं शांतिहोमं समाचरेत्॥
गृहस्येशानदिग्भागे देवतापूजनाय च द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् कुंभत्रयं न्यसेद्राशौ तंतुवस्त्रादिवेष्टितं
पूरयेत्तीर्थसलिलैः प्रतिकुंभं पृथक्पृथक् सूक्तेनाथर्ववेदेन प्रसुव आप इत्यथ ऋचा पापाः पावतस्तद्वद्गायत्र्या च ततः कु
भात् मध्यकुंभे क्षिपेद्धान्यं औषधानि च हेम च ततश्च पंचरत्नानि गंधपुष्पाक्षतान्यपि तान् औषधानि च वक्ष्यंते मुनिभिः शां

तिकारणात् औदुंबरंकुशादूर्वाराजिकंचंपविल्वकाः विष्णुक्रांताथतुलसीवर्हिषंशंखपुष्पिका शतावर्यश्वगंधावनिर्गुंडिस
र्षपद्वयं अपामार्गपलाशाश्चपनसोजीवकस्तथा प्रियंगवाश्चगोधूमाव्रीहयोश्वत्थएवच क्षीरंचदधिसर्पिश्चश्रीपर्णीच
वत्तथोत्पलं कुरंटकश्चगुंजाचवचामुस्तकस्त्रका इति द्वात्रिंशाद्दौषधानीहगायत्र्यासर्वमाहरेत् गजाश्वरथवल्मीकसं
गमाद्ध्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् कुंभस्थापनमित्याह ततन्मंत्रेणकारयेत् मृत्तिकाचौषधादी
निमंत्रेप्रक्षिपेत्क्रमात् कुंभोपरिन्यसेत्पात्रंकांस्यंवाताम्रमेववा मृण्मयंवेणुपात्रंवास्वस्ववितानुसारतः पात्रोपरिन्यसेद्धैम्नप्रतिमां
भुवनेश्वरीं तन्मत्स्यवान्यसेत्पात्रंइंद्राणींचपुरंदरं आचार्यःपूजयेद्देवीमंगावावरणानिच अन्योवापूजनंकुर्याद्गायत्र्या
मंत्रसारपा इंद्राणींपूजयेद्देवीइंद्राणीमासुनारिषु क्रमेणपूजयेदिंद्रमिंद्रत्वावृषभंवयं अनेनविधिनाचाथपूजयेद्देवता
त्रयं आवाहनादिसकलैरुपचारैःपृथक्पृथक् तन्मध्यमस्पृशन्कुंभंमंत्रेणभुवनेश्वरी जपेदाचार्य आहोमात्सूक्त
कंचजपेत्ततः स्पृशान्वैदक्षिणंकुंभंऋत्विगेकोजपेदथ चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच संस्पृशन्नुत्तरंकुंभंश्री
रुद्रंरुद्रसंख्यया शन्नइंद्राग्नीसूक्तंचतत्रचैवस्पृशञ्जपेत् कुंभस्यपश्चिमेदेशेप्राप्तिहोमंसमाचरेत् अन्वाधानंततःकुर्या
द्धोमतंत्रंसमारभेत् पूर्णपात्रनिधानांतंकृत्वाकर्येद्विजैःसह दूर्वाभिस्तिलगोधूमैः पायसेनघृतेनच पायसंश्रपयेत्तत्रसा

विघ्नं च हविश्च ततः कृत्वाज्यभागपर्यंतं हविरुद्वासनादिकं तिलैर्भिश्चैव दूर्वाभिरेकैकाचाहुतिर्भवेत् अभिमंत्रप्रयुक्ताभिर्गा
यत्रीं जुहुयात्क्रमात् अष्टोत्तरसहस्रं तु प्राग्नमष्टोत्तरं तु वा तिलमिश्रैश्च गोधूमैर्द्रव्यैर्गाज्याहुतीर्हुनेत् जुहुयात्सायंसेनै
व आज्येन च हुनेत्क्रमात् हविश्चतुष्टयेनैव प्रत्येकं शतसंख्यया गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयं ततः स्विष्टकृतं हुत्वा
रज्जुप्रहरणं तथा अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः सततामाज्यधारांतां पूर्णाहुतिं ततः चरेत् [illegible]स्मेच च प्रपर्यंतं
होमशेषं समापयेत् महौषधिस्थितैस्तत्र प्रतिकुंभस्थितोदकैः ऋतुमत्याः स्त्रियाः शांतिं दंपतिभ्यां सुखाय च अथाभिषेक
मंत्राश्च प्रोच्यंते शौनकादिभिः त्र्यंबकेण च मंत्रेण जातवेदस एकया समुद्रज्येष्ठ इत्यादि चतुर्भिश्च प्रसिद्धकैः त्रायंतामिति
मंत्रैश्च त्रिभिश्चापि यथाक्रमं इमा आपस्तु चैवैव देवस्यत्वेति मंत्रतः मंत्रेणाथ तमीशानं त्वमग्ने रुद्र इत्यथा तमु ष्टुहीति मं
त्रेण भुवनस्यपितुस्तथा पातेरुद्रे मंत्रेण शिवसंकल्प मंत्रतः इंद्र त्वा वृषभं वयं मंत्रैश्चैवाभिषेचयेत् साच वस्त्रांतरं धृत्वा पु
नश्चैवोपवासिनी उपवासोत्र समीपावस्थानं विप्रानभ्यर्च्य विधिवद्गंधपुष्पाक्षतादिभिः धेनुं पयस्विनीं दद्यादाचार्याय
च भूषणैः सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ऋत्विग्भ्यश्चाथ सर्वेभ्यो दद्याद्वै दक्षिणां ततः महाशांतिं प्रजस्त्वाथ विप्रा
शीर्वाचनं ततः ब्राह्मणान्भोजयेच्चैव भुंजीयात्स्वजनैः सह स्मृतौ ब्राह्मणान्भोजयित्वा ततो देवज्ञभोजनं ततः एवं यः कुरुते शांति

तु
शौनकोक्तप्रकारतः तदानिष्टं सकलं सर्वं वापि विनश्यतीति इति शौनकोक्तरजोदर्शनशांतिः अथ प्रयोगः कर्त्ता देशकालौ
स्मृत्वा मम पत्न्याः प्रथमरजोदर्शने अमुकदुष्टमासादिसूचितारिष्टनिरसनार्थं शांतिं करिष्य इति संकल्प्य गणेशपूजन
स्वस्तिवाचनमातृकापूजनाभ्युदयिकाचार्यर्त्विक्वरणानि कुर्यात् अथाचार्यो गृहे प्राच्यां प्रत्येकं मंत्रावृत्त्या पदार्थानु
समयेन कुंभत्रयं स्थापयेत् तद्यथा महीद्यौरिति मध्ये तद्दक्षिणोत्तरतश्च स्वस्वस्था ॐ षधय इति स्पर्शक्रमेण तेषु स्था
नेषु द्रोणप्रमाणान् व्रीहीन् राशीकृत्य तेनैव क्रमेण राशित्रये आकलशेष्विति कुंभत्रयं संस्थाप्य मध्ये प्रसुव आप इति न
वऋग्भिः तद्दक्षिणे आपः प्रवत इत्यृचा तदुत्तरे गायत्र्या जलं क्षिप्त्वा त्रिष्वपि गंधद्वारामिति गंधं या ॐषधीरिति सर्वौष
धी ओषधयः समिति यवान् क्षिप्त्वा मध्यम एव यवव्रीहितिलमाषकंगुश्यामाकमुद्गान् क्षिप्त्वोदुंबरकुशदूर्वा
रक्तोत्पलचंपकविष्णुक्रांतातुलसीबर्हिषशंखपुष्पी शतावर्यश्वगंधानिर्गुंडीरक्तपीतसर्षपापामार्ग[illegible]ल्लाश्पेन
सजीवकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभ्रद्रकमुस्तकास्या
निह्यात्रिंशदौषधानि यथासंभवं वा गायत्र्याक्षिप्त्वा त्रिषु दूर्वापंचपल्लवसप्तमृत्तिकाफलपंचरत्नसुवर्णं निक्षिप्त्वा पुवा
सुवासा इति सूत्रेण वाससा वा कुंभकंठान् वेष्टयित्वा गंधादिभिरलंकृत्य पूर्णादर्वीति यवादिपूर्णपात्राणि निधाय तेषु

साष्टदलं भ्वेतवस्त्रत्रयंतस्यमध्यमेगायत्र्याविश्वामित्रोभुवनेश्वरीगायत्रीभुवनेश्वर्यावाहनेविनियोगः तत्सवितुरिति
भुवनेश्वरी तद्दक्षिणकुंभेइंद्राणींवृषाकपिरिंद्राणीपंक्तिः इंद्राण्यावाहने० इंद्राणीमासुविति इंद्राणीं उत्तरकुंभेइंद्र
त्राविश्वामित्रइंद्रोगायत्रीइंद्रावाहने० इंद्रत्वेनोंद्रंप्रतिमासुस्थाप्यषोडशभिःपंचभिर्वोपचारैरभ्यर्च्य मध्यमेष्टसहस्र
मष्टशतंवागायत्रीश्रीसूक्तंचजपेत् ततएकर्त्विक्दक्षिणकुंभेरुद्रसूक्तानिजपेत् तानिच कद्रुद्रायेतिन[illegible]चोइमारुद्र
पतवसइत्येकादशर्चोइमारुद्रायस्थिरधन्वनइतिपंचर्चं आतेपितरितिपंचदशर्चं तमुष्टहीत्येका भुवनस्यपितरइ
त्येका त्र्यंबकंइत्येका आवोराजानंइत्येका अथान्यर्त्विगुत्तरकुंभेएकादशावृत्त्यारुद्रसूक्तंशंन्नइंद्राग्नीतिपंचदश र्चंसक्
जपेत् कद्रुद्रायेतिनवर्चस्यघोरकण्वोगायत्रीजपे० इमारुद्रायतवसइत्येकादशर्चस्यकुत्सोरुद्रआद्यानवजगत्योंते
द्वेत्रुष्टभौजपे० आतेपितरितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप्० इमारुद्रायस्थिरधन्वनेइतिचतस्यगणावसिष्ठोरु
द्रस्त्रिष्टुप्जपेविनियोगः तमुष्टिहिभौमेरुद्रस्त्रिष्टुप्० भुवनस्यपितेत्रऋत्विद्रस्त्रिष्टुप्० त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप्०आ
वोराजानंवामदेवोरुद्रस्त्रिष्टुप् जपेविनियोगः अथाचार्यःकुंभपश्चिमेग्निंसंस्थाप्यतदीशान्यांग्रहस्थापनादिपूजांतद्द
त्वातदीशान्यांएकंकुंभंस्थापयेत्तद्वरुणमावाहनादिपूजांतत्रहुत्वान्वादध्यात् तत्रास्मिन्नन्वाहितेयाविस्यादिचक्षुषीआज्येनेस

शां.म. तमुक्त्वाभुवनेश्वरीमिंद्राणीमिंद्रंचप्रत्येकममुकसंख्यापादूर्वातिलमिश्रगोधूमपायसाज्यैर्ग्रहांश्चामुकसंख्ययासमिच्चरुतिला॰
५० ज्यैः प्रोयेणास्विष्टकृत्तमित्यादियक्षइत्यंतमुक्त्वापरिस्तरणाद्याघाराज्यभागांतंकृत्वायजमानेनागप्रधानदेवताउद्दिश्य
एताभ्यइदंनममइत्युक्तेऋत्विग्भिःसहान्वाधानोक्तक्रमेणजुहुयात् अन्येतुगणपत्यैवतुहोतव्यमिहविरत्रचतुष्टय
ततःस्विष्टकृतंहुत्वास्यत्रैंद्राणींद्रयोर्होमानभिधानात् नतयोर्होमोन्वाधानेवाक्तोतेनमित्याहुः परेतुभुवनेश्वरीतस्त
न्न्यूनसंख्ययाहोमइति ततःस्विष्टकृदादिबलिदानांतंकृत्वासमुद्रादूर्मिरितितृचेनपूर्णाहुतिंहुत्वाप्रणीताविमो॰
कंकृत्वाऋग्भिः सहसभार्यंयजमानंकुंभोदकैरभिषिंचेत् तत्रमंत्राः आपोहिष्ठेतिनवऋचः यएकद्विपदयइति
त्रिभिःस्तुदेवेतिच उभयंशृणुवच्चनस्वस्तिदाविशोयइति त्र्यंबकमितिजातवेदसइति समुद्रज्येष्ठाइति ४ ऋचः
चोर्यंतामिति ३ ऋचः इमाआपइति ३ ऋचः देवस्यत्वेतितिस्रः तमीशानंजगतःत्वमग्नेरुद्रइत्येकं [illegible]नुः तमुष्टु
हीतिभुवनस्यपितरंयातेरुद्रप्रजाग्रतइति ६ एतैर्याजुषा इंद्रत्वावृषभंवयमित्यृचः सुरास्त्वामभिषिंचंत्वितियाग्
यौराणाः एवमभिषिक्तः सुस्नातोधृतशुक्लवासाः सपत्नीकोयजमानोग्निमाचार्यादींश्चसंपूज्याचार्यायधेनुंब्रह्मणे
ऋत्विग्भ्यश्चयथाशक्तिदक्षिणांरुद्रजापिनेसदक्षिणामनड्वाहंचभूयसींदत्त्वाग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्त

रपूजांकृत्वा यांतुदेवगणा इतिविसृज्याचार्याय प्रतिपाद्य गच्छगच्छेत्याग्निंविसर्जयेत् ततोब्राह्मणाः शांतिंपठेयुः तत्रमंत्राः अ
नोभद्राइति १० स्वस्तिनोमिमीतामिति १५ ऋचंवत्यमूष्विति ३ ऋचः तच्छंयोरितिच ततोयजमानोद्वादशब्राह्मणान्भोजयित्वा
संकल्प्यवाविप्राशिषोगृहीत्वासुहृद्युतोभुंजीत अथचंद्रार्कोपरागकाले आद्यरजोदर्शनेविशेषमाह कर्तोक्तकालेमा
सपक्षाद्युल्लिख्यममपत्न्याश्चंद्रस्यसूर्यस्यवाउपरागेप्रथमरजोदर्शनसूचितारिष्टनिरासार्थंशांतिंकरिष्यइतिसंकल्प्यप्राग्व
दृत्विक्पूजांतंकुर्यात् अथाचार्योगोमयेनोपलिप्तेदेशेपंचवर्णैरष्टदलंकृत्वातत्रश्वेतवस्त्रमुदग्दशंप्रसार्यतत्राप्याय
स्वेतिराजतंचंद्रप्रतिमांसूर्योपरागेतुआकृष्णेनेतिसौवर्णांसूर्यप्रतिमामावाह्यतदुत्तरतः स्वर्भानोरितिसैंह्यांप्रतिमायां
राहुमावाह्य यस्मिन्नक्षत्रेग्रहणंतन्नक्षत्रदेवतांसौवर्णप्रतिमांस्थापयेत् ततस्तन्मंत्रैः प्रणवादिनमोंतैर्नाममंत्रैर्वावाह्य
कांडानुसमयेनषोडशोपचारैः पूजयेत् तत्रचंद्रायहांनक्षत्रदेवतापक्षेग्रनक्षत्रदेवताभ्यः श्वेतानिगंधादीनि सूर्याय र
क्तानिराहवेकृष्णानि ततः पश्चिमतोग्निंप्रतिष्ठाप्य पक्षेग्रहावाहनादिपूजांतंकृत्वान्वादध्यात् तत्रचक्षुषीआज्येनेत्यंत
मुक्त्वाचंद्रसूर्यराहूंश्चामुकसंख्ययासमिदाज्यचरुतिलाहुतिभिः प्रत्येकेनेत्यादि समित्सुविशेषः चंद्रर्क्षदेवतयोः पालाशः
सूर्यस्यार्कः राहोर्दूर्वातांचतिस्रएकाहुतिः अथाज्यभागांतंकृत्वायजमानेनद्रव्येत्यक्तेन्वाधानक्रमेणर्त्विग्भिः सहहुत्वास्वि

शृङ्गादिपूर्णाहूत्यंते प्राग्वत् कृत्वैकस्मिंकुंभे जले पंचगव्यपंचरत्नत्वक् पल्लवसर्वौषधिकल्कदूर्वाकुंशान्निक्षिप्य मन्त्रविद् दं
पतीपूर्ववदभिषिंचेत् तत्रमंत्राः आपोहिष्ठेतित्र्यृचः इमंमेगंगेत्येकातत्त्वायामीत्येक अन्येपिसमुद्रज्येष्ठा। सुरास्त्वामि
त्यादयश्चशेषंपूर्ववत् इतिदुष्टरजोदर्शनशांतिप्रयोगः अथगोमुखप्रसवः गर्गः पितृरिष्टेसुतारिष्टेमातृरिष्टेतथैवच
प्रायश्चित्तंतदाकुर्यात्तद्दोषस्यशांतये० तादृशनक्षत्रोत्पत्त्यासूचितेपित्राद्यरिष्टेप्रायश्चित्तमित्यत्रापितत्तदित्यन्वेति देह
लीदीपवत् तत्तद्दोषशांत्यैतत्प्रायश्चित्तंकुर्यादित्यर्थः पूषाश्विनौगरौसार्यमघाचित्रेंद्रमूलभे एषुऋक्षेषुजातस्यकुर्याज्ज
ननंतथा जन्मर्क्षेवात्रिजन्मर्क्षेशुभवारेशुभेदिने कृत्वाभ्यंगादिकंसर्वंगृहालंकारपूर्वकं गोमयेनोपलिप्याथगृहस्यशा
नभागके पंकजंकर्णिकायुक्तंरजोभिःश्वेतवर्णकैः व्रीहींस्तत्रविनिक्षिप्ययथावित्तानुसारतः नवशूर्पेतुतन्मध्येरक्तवा
स्त्रंप्रसारयेत् स्थापयित्वाशिशुंतत्रपुनःसूत्रेणवेष्टयेत् प्राङ्मुखंतमवाक्पादंतिलग[illegible]शिशुं गोमुखंदर्शयित्वातुपु
नर्नीतंतुगोमुखात् विष्णुर्योनीतिसूक्तेनगव्येनस्नपयेच्छिशुं गवामंगेषुमंत्रेणगवांमेगेषुसंस्पृशेत् विष्णोःश्रेष्ठेनमंत्रेणगो
प्रसूतंतुबालकं आचार्यस्तुसमादायपश्चान्मात्रेददेत्तदा मातातज्जघन्यभागस्थाशिशुमानीयतन्मुखात् ततः पित्रेतदादद्या
द्दात्तोमात्रेप्रदापयेत् वस्त्रस्थाप्यपितापश्यपुत्रस्यमुखमीक्षयेत् गोमूत्रंगोमयंक्षीरंदधिसर्पिश्चसंयुतं आपोहिष्ठादि

भिर्मंत्रैरभिषिंचेत्ततः शिशुं मूर्ध्निचाघ्रायतत्सुतं तन्मंत्रेणतदापिता अंगादंगात्संभवसिहृदयादधिजायसे आत्मावैपुत्रना
मासिसजीवशरदः शतं मूर्ध्नित्रिरवघ्रायतंशिशुंस्थापयेत्ततः पुण्याहंवाचयेत्स्वश्राद्धंब्राह्मणैर्वेदपारगैः दरिद्रायाथवि
प्रायतांगामभ्यर्च्यदापयेत् गोवस्त्रस्वर्णधान्यानिदद्यादर्कादितः क्रमात् यथाशक्तिधनंब्राह्मणेभ्यस्तु दद्यात्पिता ततोहो
मंप्रकुर्वीतस्वस्वशाखोक्तमार्गतः उल्लेखनादिकंकृत्वाज्यभागांतमाचरेत् होमस्यैशानदिग्भागेधान्योपरिभुमेघटं पंच
गव्यघटेस्थाप्यतिलांस्तत्रविनिक्षिपेत् क्षीरद्रुमकषायांश्चपंचरत्नानिनिक्षिपेत् वस्त्रयुग्मेनसंछाद्यगंधादिभिरर्चये
त् विष्णुंवरुणमभ्यर्च्यप्रतिमांचविधानतः प्रतिमापक्ष्मणः अग्रेतद्देवस्यहोमविधानात् चकाराच्च यत्तदिंद्रादिभि
मंत्रैः कुंभस्थमभिमंत्रयेत् दधिमध्वाज्ययुक्तेनहोमंकुर्याद्विधानतः आपोहिष्ठेतितिसृभिरिमंमेसोमइत्यर्थे तद्वि
ष्णोः परमपदमक्षीण्यातेथसूक्ततः ऋग्भिरेभिः प्रत्यृचंचाष्टाविंशतिसंख्यया अष्टकश्चाष्टसंख्यत्वाद्दधिमध्वाज्यसंयु
तं दधिमध्वाज्येतिपुनर्ग्रहणात् आदित्यादिग्रहैरन्वेति। आदित्यादिग्रहाणांचहोमंकुर्यात्समंत्रकं इतिगोमुखप्रस
वविधिः अथप्रयोगः मासपक्षाद्युल्लिख्यास्यशिशोरमुकर्क्षोत्पत्तिसूचितारिष्टशान्त्यर्थं गोमुखप्रसवंकरिष्यइत्युक्त्वा
गणेशपूजनाचार्यवरणंकुर्यात् आचार्योगोमयेनोपलिप्तगृहस्यैशानदिग्भागेभिन्नेनाष्टदलगतव्रीहिस्थशूर्पेरक्तवस्त्रप

स्रार्धतिलान्विकीर्यतत्रप्राङ्मुखंदक्षिणदिग्गतपादंशिशुंसंस्थाप्यसूत्रेणावेष्ट्यगोमुखेसंयोज्यमुखात्प्रापंवविविंस्यविष्णु
र्योनिमितिसूक्तेनपंचगव्येनशिशुंसंस्नाप्यगवामंगेष्वितिगांस्पृष्ट्वाविष्णोःश्रेष्ठेनेतिशिशुंगृहीत्वामात्रेदद्यात् मातागोमु
खप्रदेशाच्छिशुमानीयगोपुच्छदेशेपित्रेदद्यात्पिताचमात्रेदत्वाभूमौवस्त्रेसंस्थाप्यतन्मुखंदृष्ट्वापंचगव्येनापोहिष्ठेतितृचेनर
भिषिंच्यांगादंगादितित्रिमूर्ध्न्याघ्रायपुण्याहंवाचपित्वागामाचार्यायदत्वाग्रहप्रीत्यर्थेगोवस्त्रस्वर्णधान्यानिदत्वाभू
यसींदक्षिणांदद्यात् अथाचार्योग्निंप्रतिष्ठाप्यचक्षुषीआज्येनेत्यंतेवरुणंआपोहिष्ठेतितृचेनअप्सुमेसोमइत्यृचाविष्णुन
हिष्णोरित्यृचायक्ष्महणमक्षीभ्यामितिग्रहांश्चप्रत्यृचमष्टाविंशत्यष्टान्यतमसंख्ययादधिमध्वाज्यैः प्रोषेणस्विष्टकृतमिसा
घुत्काज्यभागांतंकृत्वाग्नेरीशान्यांकुंभंसंस्थाप्यतत्रपंचगव्यतिलान्व्रीहिक्षीरद्रुमकषायान्क्षिप्त्वावस्त्रयुग्मेनावेष्ट्यपूर्णपात्रो
परितद्विष्णोरितिविष्णोस्त्वापामितिवरुणंस्याक्षीभ्यामितियक्ष्मघ्नप्रतिमारभ्यर्च्य यतइंद्रेतिषस्नाभर्गः प्रगाथइंद्रोग्नी
ह्वंतप्रगाथंछंदः जपेविनियोगः यतइंद्रेतिषडृचोतस्त्वान्वाधानक्रमेणहुत्वाकर्मशेषंसमापयेदितिगोमुखप्रसवप्रयो
गः अथसर्वदंतोत्पत्ति विष्णुधर्मोत्तरे उपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः द्विजाःदंताः दंतैर्वासहयस्यस्याज्जन्मभा
भार्गवसत्तम मातरंपितरंवाथखादेदात्मानमेववा तत्रशांतिंप्रवक्ष्यामितांमेनिगदतःशृणु गजपृष्ठगतेवालेनौस्थेवाश्वा

सर्वगंधैरपिपाठः१

पयेद्दिज तदभावे च सर्वज्ञ कांचने च वरासने सर्वौषधैः सर्ववीजैः सर्वपुष्पैः फलैस्तथा पंचगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव स
र्वौषधानि सर्वगंधश्च विनायकस्नपनविधौ दर्शिताः स्थालीपाकेन धातारं पूजयेत्तदनंतरं सप्ताहं चात्र कर्तव्यं ततो ब्राह्मणभो
जनं अष्टमेहनि विप्राणां तथा देया च दक्षिणाः कांचनं रजतं गाश्च भुवमागारमेव च इतजन्मनि सामान्ये शृणु स्नानमतः परं।
भद्रासने निवेश्यैनं मूर्ध्नि मूलैः फलैस्तथा सर्वौषधैः सर्वगंधैः सर्ववीजैस्तथैव च स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणं प
र्वतांश्च तथाख्यातान् देवदेवं च केशवं एतेषामेव जुहुयात् घृतमग्नौ यथाविधि ब्राह्मणानां तु दातव्या यथाशक्त्या तु दक्षि
णा तत्र स्वलंकृतं बालं मासने चोपवेशयेत् आसीनस्सूर्यसंतानवीजैः सुस्नापयेत्ततः सविप्रबालकानां वृत्तैश्च कार्यं च पू
जनं पूज्यश्च विधिनाचार्यो ब्राह्मणाः सुहृदस्तथा इति सर्वतोमतिशांतिः अथ कृष्णचतुर्दशीजननशांतिः गर्गः कृष्ण
पक्षे चतुर्दश्यां प्रसूतेस्तद्विधैः फलं चतुर्दशीं च षड्भागां कुर्यादाद्ये शुभं मतं द्वितीये पितरं हंति तृतीये मातरं स्मृतं चतुर्थे मा
तुलं हंति पंचमे वंशनाशनं षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनं तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः आचार्यो व
रयेद्धीमान् सूत्रधारसमन्वितं स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगं सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतं वृषभे च समासीनं
वरदाभयपाणिनं शुद्धस्फटिकसंकाशं श्वेतमाल्यावरावृतं त्र्यंबकेन च मंत्रेण पूजां कुर्याद्विधानतः स्थापयेच्चतुरः कुंभा

शां·म॰ च चतुर्दिक्षु यथाक्रमं पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् तन्मध्ये स्थापयेत्कुंभं व्रणत्छिद्रसमन्वितं पंचमृत्सं
५३ च रत्नानि पंचत्वक्पंचपल्लवान् पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् सर्वौषधानि निक्षिप्य श्वेतवस्त्रेणावेष्टयेत्॥
सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः आयांतु यजमानस्य दुरितक्षयकार
काः आवाह्य वारुणैर्मंत्रैरनेन विधिना ततः इमं मे वरुणेत्यनया तत्त्वायामि च तथा त्वन्नो अग्न इत्यनया स त्वन्न इति मं
त्रतः आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमं आनोभद्राख्यसूक्तं च भद्रा अग्नेश्च सूक्तकं ततः जप्यात्तु पौरुषं सूक्तं कद्रुद्रं तु क्रमा
ज्जपेत् ईश्वरस्याभिषेकं च ग्रहपूजां समाचरेत् पूजाकर्मसु निर्वर्त्य होमं कुर्याद्विधानतः गृहादीशानदिग्भागे कुंडं कुर्या
द्विधानतः विस्तारायामखातं च अरत्निद्वयसंमितं समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः अश्वत्थप्लक्षपालाशाः स
मिद्भिः खादिरैः शुभैः अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक्पृथक् त्र्यंबकेनं
चमंत्रेण तिलान्व्याहृतिभिः पृथक् कृत्वा होमांश्च कर्तव्या अस्मदुक्तविधानतः एवं क्रमेण कर्तव्यं होमशेषं समापयेत् स
र्वालंकारयुक्तानां त्रयाणामभिषेचनं त्रयाणां मातापितृशिशूनां चतुर्भिः कलशैर्दिक्स्थैः कुंभसमन्वितं धौतांबराणि द
त्त्वाथ कुर्यादाज्यावलोकनं पूर्णाहुतिं च जुहुयाद्यजमानसमाहितः तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् सर्वालंकारसंयु

कासवत्सांगांपयस्विनीं प्रतिमांवस्त्रयुग्मंचआचार्यायनिवेदयेत् अन्येषांचैवसर्वेषांकुर्याद्ब्राह्मणवाचनं तस्मादेतेनविधि
नावित्तशाठ्यविवर्जितः एवंयः कुरुतेशांतिंसर्वपापैःप्रमुच्यते सर्वान्कामानवाप्नोति स्थिरजीवीसुखीभवेत् इतिकृष्णच
तुर्दशीशांतिः अथसिनीवालीकुहूशांतिः गार्ग्यः सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा गजाश्वमहिषी चैवशाक्र
स्यापिपरिहरेत् येसंतिसकलापश्चात्तत्प्रसादोपजीविनः वर्जयेत्तानशेषांस्तुपशुपक्षिमृगादिकान् कुहूप्रसूतिरत्यर्थंसर्व
दोषकरीस्मृता यस्यप्रसूतिरेतेषां तस्यायुर्धननाशने सर्वगंडसमस्तत्रदोषस्तुप्रबलोभवेत् शांतिंविनाविशेषेणपरि
त्यागोविधीयते परित्यागात्तत्रशांतिंकुर्याद्धीमान्विचक्षणः परित्यागादितित्यपलोपेपंचमीपरित्यागंकृत्वेत्यर्थः तत्का
लंतस्त्यागाद्वैनपुनरेवानुपालनं नसृजेत्खंडितोमोहादर्थाद्दत्तान्ततोपिवा तद्योगान्नाशयेत्किंचित्स्वयंवानाशमश्नुते क
त्योक्तशांतिःकर्तव्यासर्वदोषापनुत्तये रुद्रः शक्रश्चपितरः पूज्यास्तुदेवताःक्रमात् कर्षमात्रसुवर्णेनतदर्धेनवापुनः
अथवाशक्तितःकुर्याद्वित्तशाठ्यविवर्जितः प्रतिमांकारयेच्छंभोश्चतुर्भुजसमन्वितां त्रिशूलखड्गवरदाभयहस्तायथा
क्रमं श्वेतवर्णाश्वेतपुष्पाश्वेतांबरवृषस्थिता त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि इंद्रश्चतुर्भुजोवज्रांकुशावायः
ससायकः रक्तवर्णोराजारूढोयतइंद्रेतिमंत्रतः पितरःकृष्णवर्णाश्चवतुर्हस्ताविमानगाः गदासूत्रकमंडलभया

स्यैवधारिणः येसत्याइतिमंत्रेणपूजांकुर्यादनंतरं आग्नेयींदिशामारभ्यकुंभान्कोणेषुविन्यसेत् येसत्यासोहविरदंतद्
सादिमंत्रऋग्वेदेप्रसिद्धः तन्मध्येस्थापयेत्कुंभंशतच्छिद्रसमन्वितं निक्षिपेत्पंचगव्यादींस्तत्तन्मंत्रैश्चनिक्षिपेत् कल्पो
क्तशांतिःकर्त्तव्याकुर्याच्छीघ्रंस्वशक्तितः गोदानंवस्त्रदानंचसुवर्णंचोर्वरांशुभां दशदानिचोक्तानिक्षीरमाज्यंगुडंतथा
आज्यावेक्षणपात्राणितत्तन्मंत्रैश्चकारयेत् समिदाज्यंचहोमंचतिलहोमंचसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिः खा
दिरैःशुभैः अष्टोत्तरशतंमुख्यंप्रत्येकंजुहुयाद्द्विजः त्र्यंबकेनमंत्रेणतिलान्वाहुतिभिःपुनः चतुर्भिःकलशैर्युक्तंवृ
हत्कुंभसमन्वितं शांतिवत्सकलंकार्यंअभिषेकंचकारयेत् शांतिवपूर्वोक्तशांतिवत् पितृमातृशिशूनांचअभिषिंचेच्च
वारुणैः शंकरस्याभिषेकंचकुर्याद्ब्राह्मणभोजनं अन्येषांचैवसर्वेषांब्राह्मणानांचतर्पणं यथाशक्त्यानुसारेणद्विजवाचन
पूर्वकं अथप्रयोगः तत्रचतुर्दश्याःषडंशेषुद्वितीयतृतीयषष्ठांशेषुजन्मचेत् गोप्रसवोपिकार्यः कर्त्तामासपक्षाद्युल्लि
स्यास्यशिशोश्चतुर्दश्याद्यभागादिषुसिनीवाल्याकुह्वोर्वोत्पन्नस्यासूचितस्यानिष्टस्यनिरासार्थंशांतिंकरिष्यइतिसंकल्प्य
गणेशपूजास्वस्तिवाचनमातृपूजावृद्धिश्राद्धाचार्यादिवरणानिकुर्यात् ततः आचार्यःसर्षपविकिरणादिकृत्वापीठादौ
वरदाभयहस्तंवृषभस्थांहैमींरुद्रप्रतिमांत्र्यंबकमंत्रेणसंपूजयेत् सिनीवालीकुह्वोस्तुरुद्रेंद्रपितरः तत्ररुद्रईशानोर्ध्वे

करकमात्रिशूलखड्गवरदाभयहस्तो वृषस्थस्त्र्यंबकमंत्रेणाद्रुद्रो वज्रांकुशधनुः शरकरः कोगजस्थापतद्रुद्रात्तु मंत्रेणा
कृष्णवर्णो गदाक्षसूत्रकमंडलुभयकरा विमानस्थापेमत्सासद् इतिमंत्रेस्थापयेत् पूज्याद्इति विशेषः ततः तत्सोच्यामीशान्या
मुदीच्यां वाग्नेयादिषु चतुरः कुंभान्मध्ये च शतच्छिद्रं संस्थाप्य तेषु पंचमृदः पंचरत्न पंचत्वक् पंचपल्लव धान्यानि सुवर्णं सर्वौ
षधीश्च क्षिप्त्वा श्वेतवस्त्रपुष्पमालाभिरावेष्ट्य सर्वे समुद्रा इत्यभिमृश्य इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने स त्वन्न इति मंत्रेण
वरुणमावाह्य संपूज्य क्रमेण आ नो भद्रा अपेम सहस्रशीर्षा कद्रुद्राय इति सूक्तानि जपित्वा यथाशक्ति रुद्राध्यायादिनाभिषिं
च्य ग्रहानावाह्य संपूज्य ग्रहेशान्यामग्निं संस्थाप्यान्वादध्यात् तत्र चक्षुषी आज्येनेत्यंते चतुर्दशीशान्तो रुद्रमभ्यर्च्यशूलक्षया
लाशखदिरसमिद्भिराज्यचरुतिलमाषसर्षपैः प्रत्येकममुकसंख्यपायसस्त समस्त व्याहृतिभिस्तिलैश्चामुकसंख्य०
पायक्ष्य इत्यादि शिनीवाल्याकुह्वौ च रुद्र इंद्र पितरश्च प्रधानदेवताः त्र्यंबकमंत्रेण च शक्तितस्तिलहोमोऽधिकः इति
विशेषः तत आज्यभागांते अन्वाधानक्रमेण होमः सिनीवालीकुह्वोस्तु गोवस्त्रसुवर्णभूक्षीराज्यगुडान्दत्त्वा गोभूतिल
हिरण्याज्यवस्त्रधान्यगुडरूप्यलवणादानानि च दशकृत्वा होमः कार्य इति विशेषः ततो बलिदानांते कलशोदकैः शत
छिद्रेणाद्देवस्यमंत्रैरभिषिक्तः पत्नीशिशुसहितो यजमानः आज्यमवेक्ष्य पूर्णाहुतिं हुत्वा गुरवे धेनुं वासोयुग्मं च स्विष्ट

श्चदक्षिणांचदत्वास्वस्तिवाच्यकर्माचार्येणकुर्यादितिकृचतुर्दशीसिनीवालीकुहूशांतिप्रयोगः अथदर्शजननशांतिः नार
दः अथातोदरिद्रता तद्दोषपरिहारायशांतिंवक्ष्यामिनारदः पुण्याहंवाचयित्वादौऋतुसंकल्पपूर्वकं कुंडंवामंडलंकुर्यां
त्रदेशेस्थापयेद्घटं मंडलस्थंडिलेतत्कुंभेनिक्षिपेद्द्रव्यंदधिक्षीरघृतादिकं न्यग्रोधोदुंबराश्वत्थाःसचूताःप्लक्षकास्तथा॥
एतेषांवृक्षमूलानांत्वचादीन्यच्छवांस्तथा पंचरत्नानिनिक्षिप्यवस्त्रयुग्मेनवेष्टयेत् सर्वेसमुद्राःसरितस्तीर्थानिजलदा
नदाः आयांतुयजमानस्यदुरितक्षयकारकाः आपोहिष्ठात्र्यृचेनाथकयानश्चित्रइत्यृचा यत्किंचेदमृतावैवसमुद्रज्येष्ठइ
त्यृचा अभिमंत्र्योदकंपश्चादग्नेः पूर्वप्रदेशके हारिद्रंरक्तकंचैवकृष्णंश्वेतंचजीरकं एतेषांतंदुलैश्चैवसर्वतोभद्रमुद्धरेत्
दर्शस्यदेवतापश्चात्सोमसूर्यस्वरूपकं प्रतिमास्वर्णजानित्यंराजतीताम्रजातथा सर्वतोभद्रमध्येतुस्थापयेद्दर्शदेवता
षड्वर्णैर्वस्त्रयुग्मेनदुर्गागंधपुष्पकं आप्यायस्वेतिमंत्रेणसवितापश्चात्तथैवच उपचारैः समभ्यर्च्यततोहोमंसमा
चरेत् कृत्वावह्निंप्रतिष्ठाप्यऋतुसंकल्पमीदृशं आयुरारोग्यसिद्ध्यर्थंसर्वारिष्टप्रशांतये पुत्रस्यदर्शजननदोषनि
र्हरणायचामातापित्रोःकुमारस्यसर्वारिष्टप्रशांतये तेषामायुः श्रियंचैवशांतिहोमंकरोम्यहं॥ समिधश्चचरुद्रव्यं
क्रमेणजुहुयात्कृती हुनेत्सवित्रिमंत्रेणसोमोधेनुंचमंत्रतः एतैर्मंत्रैश्चप्रत्येकंहुनेदष्टोत्तरंशतं दर्शस्यदेवताहोम

अष्टाविंशतिसंख्यया सवित्रिमंत्रेणोक्तेनेति अत्रैतैरितिबहुवचनं दर्शदेवतामंत्राभिप्रायेण होममेवं तूक्त्वा कु
र्याद्धाराभिषेचनं श्रीसूक्तमापुष्यसूक्तं समुद्रज्येष्ठेत्यृचा एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा ततः स्विष्टकृद
द्धोममशेषं समाचरेत् हिरण्यं रजतं चैव कृष्णां धेनुं सदक्षिणां अन्येभ्योपि यथाशक्त्या दातव्या दक्षिणा तथा ब्राह्मणा
न्भोजयेदत्र कारयेत्स्वस्तिवाचनं इति दर्शजननशांतिः अत्र सिनीवालीकुह्वोर्दर्शयोरुक्तयोः शांत्योर्व्यवस्थोच्यते छंदोगप
रिशिष्टभाष्ये चतुर्दश्यंशोऽमावास्याश्चाष्टौ इति नवप्रहराश्चंद्रक्ष्य कालः चतुर्दश्यष्टमे यामे क्षीणो भवति चंद्रमा अमावा
स्याष्टमे भागे पुनः किल भवेदणुरिति वाक्यात् अत्रेंदुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः तदंतमेव क्षयमेति कृत्स्न
मेवं ज्योतिश्चक्रविदो वदंतीति वाक्यात् एवं चतुर्दश्यामत्यायामेवोरणुश्चंद्रः शास्त्रचक्षुषो गोचरो भवतीसकालो दृष्टचंद्र
त्वात्सिनीवाली अमावास्यायां यामयोः शास्त्रचक्षुषोरगोचर इति क्षीणश्चंद्रः सकालः कुहूर्मध्यमाः पंचयामा दर्श इति व्य
वस्थापाशांतिव्यवस्थेति परे तु चतुर्दशीमात्रयुक्ते होरात्रे वर्तिन्यमा सिनीवाली प्रतिपन्मात्रयुतेन कुहूः गात्रयस्पर्शिम
ध्यमाहोरात्रावर्तिन्यमादर्शः तस्मिंश्चतुर्दशीप्रतिपदोरभावेनोभयलक्षणानाक्रांतत्वात् तथाचमवतीचामादर्शः केवलचतुर्द
शीकेवलप्रतिपद्युक्तत्वाभावात् अतस्त्रिस्पर्शिन्याममवस्यायां सिनीवालीकुहूशांतिप्राप्त्यभावात् दर्शशांतिप्राप्तिरितियुक्त

माहुः अथ दर्शजननशांतिप्रयोगः कर्तास्य कुमारस्य कुमार्या वा दर्शजन्मसूचितानिष्टनिवृत्त्यर्थं शांतिं करिष्य इति संकल्प्य गणेश-
पूजास्वस्तिवाचनाचार्यादिवरणानि कुर्यात् अथाचार्यः सर्षपविकिरणप्रोक्षणादि कृत्वा शुद्धभूमौ जलपूर्णं पंचगव्यपल्लव-
त्वक्रत्नयुक्तं वासोयुग्मवेष्टितं कुंभं धान्योपरि संस्थाप्य सर्वे समुद्रा इति तीर्थान्यावाह्यापो हि ष्ठेति तृचेन केपानश्चित्र इति
ऋचा यत्किंचेदमिति तृचा समुद्रज्येष्ठा इति तृचेन मभिमंत्र्य तन्नैरृत्य देशे पंचरंगरंजितैस्तंडुलैः सर्वतोभद्रं कृत्वा तत्र स्वर्ण-
प्रतिमायां येसत्यास इति पितॄन् तद्दक्षिणे रूप्यप्रतिमायामाप्यायस्वेति सोमं तदुत्तरे ताम्रप्रतिमायां सवितापश्चादिति सूर्यं चावा-
ह्य संपूज्य आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये पुत्रस्य दर्शजननदोषनिर्हरणाय च मातापित्रोः कुमारस्य सर्वारिष्टप्र-
शांतये तेषामायुः श्रियं चैव शांतिहोमं करोम्यहं इति उक्त्वा तत्पश्चिमे कुंडे स्थंडिले वाग्निं प्रतिष्ठाप्य तदीशान्यां ग्रहा-
न् संपूज्यान्वाधाने आघारावाज्येनेत्युक्त्वा पितॄन् समिच्चरुभ्यामष्टाविंशतिवारं सोमं सूर्यं चाष्टोत्तरशतवारं शेषेणाज्यभा-
गांतेन्वाधानक्रमेण पूजामंत्रैर्हुत्वा मातापितृशिशून् हिरण्यवर्णामिति चत्वदशर्चेन आयुष्यं वर्चस्यमिति दशर्चेन स-
मुद्रज्येष्ठा इति तृचा च जलधारयाभिषिच्य स्विष्टकृदादि समापयेत् यजमानो बलिदानपूर्णाहुत्यंते हेमरूप्यकृष्णाधेनु-
राचार्याय ऋत्विग्भ्यश्च यथाशक्ति दक्षिणां दत्वा विप्रान् संपूज्य स्वस्तिवाचनं कुर्यात् इति दर्शशांतिः अथ ज्येष्ठाशांतिः वृद्ध

गार्ग्यः घटिकैकाचमैत्रांते ज्येष्ठादौ घटिकाद्वयं तयोः संधिरितिज्ञेयं त्रिंशुगंडं समीरितं प्रथमे च द्वितीये च ज्येष्ठर्क्षे दत्ततीयके पा
दत्रये जातनरो ज्येष्ठं यत्र प्रजायते ज्येष्ठांत्यपादजातस्य पितुस्तस्य विनाशकः जायते नात्र संदेहो दशाहं भ्यंतरेपि वा ज्येष्ठर्क्षे
कन्यका जाता हंति शीघ्रं धवाग्रजं तत्छांतिं तस्य वक्ष्यामि गंडदोषप्रशांतये ॥ सुदिने शुभनक्षत्रे चंद्रताराबलान्विते स्व
लंकांते तथा कुर्याज्ज्येष्ठशांतिं विधानतः वज्रांकुशधरं देवमैरावतगजान्वितं कुर्यात्स्वर्णमयीं प्रतिमां देवेंद्रं सुरनायकं ॥
कर्षमात्रसुवर्णेन तदर्धेनाथ पादतः तद्विधानं प्रकुर्वंति वित्तशाठ्यं न कारयेत् शालितंदुलसंपूर्णे कुंभस्योपरि पूजयेत्
देंद्रायेंदो मरुत्वतइति मंत्रेण वाग्यतः गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः पूजयेत् विधिना विप्र लोकपालगणान्वितं
रक्तवस्त्रद्वयोपेतं पूजयेत् सुरनायकं तत्र संस्थापयेत् कुंभांश्चतुर्दिक्षु विशेषतः तन्मध्ये स्थापयेत् कुंभं शतछिद्रसमन्वि पुण्यो
दकसमापुक्तान्वस्त्रयुग्मेन वेष्टितान् कुंभेषु विन्यसेद्देसान्पंचगव्यसमंत्रकं पंचामृतं पंचरत्नमृत्तिकाः पंचसंख्यया ॥
पंचवृक्षकषायांश्च पंचपल्लवकांस्तथा सुवर्णकुशदूर्वाश्च शतौषधिविनिक्षिपेत् पूजयेद्वारुणैर्मंत्रैः कुंभान्धीमान् प्र
त्नतः त्वन्नो अग्नेजपेदादौ सत्वन्नोपि द्वितीयकं समुद्रज्येष्ठाइति इमंमेगंगे चतुर्थकं पूजयेद् स्वपुग्माद्यैश्चतुरः कलशा
नपि जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजोत्तमा आनोभद्राजपेदादौ भद्रां अग्ने द्वितीयकं तृतीयं पौरुषं सूक्तं कद्रुद्राय चतु

र्थकं आचार्योमूलमंत्रेणजपंकुर्याद्विशेषतः ॥ इंद्रसूक्तंरुद्रजाप्यंजपन्मृत्युंजयंतथा इत्थंसंपूज्यदेवेशंवरुणंकुंभसंस्थितं
सुसंकल्प्यविधानेनहोमकर्मततश्चरेत् समिद्भिर्ब्रह्मवृक्षस्यशतमष्टोत्तरंतथा सर्पिषाचरुणाचैवमूलमंत्रेणवाग्यतः॥
हुनेज्जाप्यंचतेनैवपतंद्रुमभ्येतिचतिलान्व्याहृतिभिर्हुत्वाशतमष्टोत्तरंतथा भार्याशिशुसमोपेतंयजमानंविशेषतः अभि
षेकंप्रकुर्वीतमंत्रैर्वारुणसंज्ञिकैः समुद्रज्येष्ठादिभिर्मंत्रैरिमंमेवरुणस्तथा द्यौःशांतिरित्यादिभिर्मंत्रैरभिषेकंसमाचरेत्
अभिषेकेनिवृत्तेतुयजमानःसमाहितः सुल्कावराणिधृत्वाथकृत्वाआज्यावलोकनं रूपेणावेतिमंत्रेणाचिंत्रेणाचिंत्रंतस्त्व
ष्टुरेवच देवतापुरतःस्थित्वाधूपदीपनिवेदनं दद्यात्त्वाचमनंसम्यक्तांबूलार्घ्यंतथैवच नमस्तेसुरनाथायनमस्तुभ्यंशची
पते गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये कार्यंतत्सूजकादीनांकारितंयत्फलंशुभं जन्मानुवत्फलंसर्वंदेवेन्द्रायसमर्पयेत्
आचार्यायचगांदद्यात्सुशीलांचपयस्विनीं रक्तवर्णांवस्त्रयुक्तांसर्वालंकारभूषितां वस्त्रयुग्माभिधानांचयथावित्तानुसा
तः यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते दानेनानेनदेवेशगंडदोषंविनाशय अष्टोत्तरशतंसंख्याकुर्याद्ब्राह्मणभोज
नं तेभ्योपिदक्षिणांदत्त्वाप्रत्यक्षमापयेत् इमांकृत्वाशांतिज्येष्ठायथाविध्युक्तमागतः गंडदोषंविनिर्जित्यआयुष्मान्जा
यतेनरः इत्युक्तंचहद्गार्ग्येणशौनकायविशेषत ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये अज्ञानाद्वाथज्ञानाद्वावैकल्या

ह्राधनस्यव यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुमर्हसि अथप्रयोगः गोमुखप्रसवंकृत्वास्यशिशोः ज्येष्ठाजननसूचितस
कलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनपुण्याहवाचननांदीश्राद्धाचार्य
ऋत्विक्चतुष्टयवरणानिकुर्यात् ततः आचार्यः सर्षपविकिरणभूमिप्रोक्षणंकृत्वामहीद्यौरित्यादिविधिनाशालितं
डुलपूर्णंकुंभंसंस्थाप्यपूर्णपात्रोपरिहैमीमिंद्रप्रतिमांइंद्रायेंद्रोमरुत्वत् इतिमंत्रेणरक्तवस्त्रद्वयेगंधादिभिश्चकल्पोक्त
पूजयेत् · ततइंद्रभिन्नान्लोकपालान्समंत्रादावाह्यपूजयेत् ततःपूर्वादिदिक्षुचतुरःकुंभान्मध्येव्रातछिद्रपुण्योदकवम
स्त्रमाल्यादियुतंसंस्थाप्यदिक्कुंभेषुपंचगव्यपंचामृतपंचरत्नपंचमृत्तिकापंचक्षकषायपंचपल्लवसुवर्णकुशदूर्वाः शतौष
धीश्चदत्वापूर्वकलशेत्वन्नो अग्नइतिसत्वन्नोअग्नइतिदक्षिणेसमुद्रज्येष्ठाइतिपश्चिमेइमंमेगंगेइतिउत्तरेवरुणमावाह्य
वस्त्रपुष्पाद्यैः पूजयेत् ततश्चत्वारोऋत्विजः आनोभद्राभद्राअग्नेपुरुषसूक्तः कद्रुद्रायसूक्तानिजपेयुः आचार्योष्टशता
दिसंख्ययाइद्रायेंद्रोमरुत्वतइतिमूलमंत्रेणइंद्रं विश्वामित्रवीदृधन्नित्यष्टंचेंद्रसूक्तंरुद्रंमृत्युंजयंयथाशक्त्याजपेत् त
तोग्निग्रहाश्चसंस्थाप्यान्वादध्यात् तत्राग्नीषोमौचक्षुषीआज्येनेत्यंते अत्रप्रधानंइंद्रंपलाशसमिदाज्यचरुद्रव्यैरष्टश
तसं ख्यया अष्टसहस्रसंख्ययावाइद्रनेनप्रजापतिंतिलद्रव्येणाष्टशतसंख्ययाव्याहृतिभिः शेषेणस्विष्टकृतमित्यादि

वर्त्यंते पूर्णाहुतिं पूर्णपात्रदानं प्रणीताविमोकं च कृत्वा सभार्यं सशिशुं यजमानं वारुणैः सूक्तैः समुद्रज्येष्ठा इमं मे वरुण यो
शांते त्यादिभिरभिषिंचेत् ततो रूपमिति आज्यमवलोक्य तत्पात्रं सदक्षिणं ब्राह्मणाय दत्त्वा इंद्रं संपूज्य नमस्ते सुरनाथाय न
मस्तुभ्यं शचीपते गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये इत्यर्घ्यं दत्त्वा आचार्याय ऋत्विग्भ्यः श्रेयो गृहीत्वा इंद्राय समर्प्य
चार्पय पयस्विनीं गां रक्तवस्त्रद्वयं च दत्त्वोत्तरपूजांते इंद्रं विसृज्य प्रतिमां यक्षगंधर्वसिद्धैश्च पूजितोसि शचीपते दानेनाने
न देवेश गंडदोषप्रशांतये अज्ञानाद्वाथ ज्ञानाद्वा वैकल्याद्वा धनस्य च यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसीति मंत्रेण
दत्त्वा ऋत्विग्भ्योपि यथाशक्ति दक्षिणां दत्त्वाग्निं विसृज्याष्टशतब्राह्मणान्भोजयेत् अथ मूलशांतिः शौनकः अथातः संप्र
वक्ष्यामि मूलजातहितावहं। मातापित्रोर्धनस्यापि कुलस्यापि हितावह त्यागो वा मूलजातस्याष्टाब्दाच्च प्रदर्शनं अ
भुक्तमूलजातानां परित्यागो विधीयते अदर्शनाद्वा पिपितः स तु तिष्ठेत्समाष्टकं एवं दुहितरि प्रोक्तं मूलजाताफलं बुधैः
कन्यायां तु विशेषः नवालाहंति मूलर्क्षे मातरं पितरं तथा मूलजा श्वशुरं हंति व्यालजा तु तदंगना महेंद्रजाग्रजं हंति दे
वरं च द्विदैवजा व्यालं आश्लेषा महेंद्रं ज्येष्ठा द्विदैवं विशाखा शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चनेति मुख्यका
लं प्रवक्ष्यामि शांतिहोमं जपं ततः जातस्य द्वादशाहे वा जन्मर्क्षे वा शुभे दिने समाष्टके द्वादशाब्दे कुर्याच्छांतिकमादरात्॥

पदैवशांतिकंकुर्यात् कर्मतत्रप्रवक्ष्महे संस्कृतेपुराणदेशेतुमंडपंकारयेद्बुधः पुराणोग्नेमेत्रितेस्तोयैः प्रोक्षितायांक्षितौततः
तत्रोदकुंभंसुश्लक्ष्णंगारकंव्रणविवर्जितं सुवृत्तुलंचनिर्णिक्तंपूरयेन्निर्मलांभसा वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा ॥कू
र्चद्वैमसमायुक्तंचूतपल्लवसंयुतं स्वस्तिकोपरिविन्यस्यसक्षीरद्रुमपल्लवैः द्रोणव्रीहींश्चनिक्षिप्यईशानेचनिधापयेत् पं
चरत्नानिनिक्षिप्यसर्वौषधिसमन्वितं अर्चितंगंधपुष्पाद्यैः श्रीरुद्रंचपृथक्जपेत् षडंगसहितंसम्यक्जपेद्वैरुद्रसंख्य
या वह्न्यावारुद्रसूक्तैर्वाछंदोगारुद्रसामभिः सूक्तानिसामानिचत्रीण्येवकपिंजलन्यायात् एकादशावृत्तिरेकसंख्यायाश
क्तितोजपेत् तत्राप्रतिरथंसूक्तंशतरुद्रानुवाककं रुद्रानुवाकंतथापुण्यंराक्षोघ्नंचसप्तशनंजपेत् त्रैयंबकंजपेत्सम्यक्त्र्यष्टो
त्तरंसहस्रकं एकवारंतथावापिपावमानीःसप्तशनंजपेत् जपस्यपंचकुंभास्युर्द्वयंवातदलाभतः श्रीरुद्रस्यैककुंभश्चसर्व
सूक्तानितत्रतु तथान्यच्चशुभंकुंभंपूर्वोक्तैर्लक्षणैर्युतं चतुःप्रश्रवणंकुर्यात्संचवक्रांजुतद्भवेत् अत्रायंसांप्रदायिकोर्थः आ
द्यपक्षेषट्कुंभाः पंचरुद्रस्यतस्मिन्शांतरुद्रीयरुद्रसूक्तानिसामानिजप्यानि अभिषेकार्थेपंचकुंभाःतत्रपूर्वादिकुंभचतु
ष्टयेतत्राप्रतिरथमित्यादिनाक्रमात्सूक्तचतुष्टयविधिः मध्येचत्र्यंबकमंत्रपावमानीजपेद्विधिः एवंपंचकुंभाशक्तौचतुःप्र
श्रवणएवद्वयमितिद्वितीयंतुरुद्रकुंभमादाय अतएवश्रीरुद्रस्येतिश्लोकार्थेनरुद्रकुंभएवपूर्वोक्तोद्वित्वसंख्यापूर्णायानुय

तोचतुः प्रश्रवणएवतुपंचकुंभस्थानेविधीयते एवंपंचवक्त्रंतुतद्भवेदितिपंचवक्त्रतोक्तिरपिपंचकुंभस्थानीयत्वात्संगच्छते वस्त्रा
वगुंठितंकुर्यात्सूत्रेणैतौर्थवारिणा पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं गजाश्वरथ्यावल्मीकात्संगमात्ह्रदगोकुलात् राजद्वा
रप्रदेशाच्चमृदमानीयनिक्षिपेत् कुंभस्यनैरृतेदेशेहोमदेशंप्रकल्पयेत् गोमयालेपितेदेशेकुर्यात्स्थंडिलमुत्तमं कृत्वाग्नि
मुखपर्यंतमुत्तेरवादिस्वशाखितः पूर्णपात्रनिधानांतंकृत्वापूजांसमाचरेत् नक्षत्रदेवतारूपंसुवर्णेनप्रयत्नतः निष्कमात्रे
णतदर्धेनपादेनाथस्वशक्तितः प्रतिमालक्षणोपेतांकारयित्वाविचक्षणः पद्मामूलंसुवर्णस्यसंस्थापयित्वाप्रपूजयेत् मूलंमूला
कारमूल्यामितिक्वचित्पाठः तदाप्रतिमामूल्यमित्यर्थः सुवर्णस्यचवर्णस्यसंस्थापयित्वाप्रपूजयेत् सुवर्णंसर्वदेवत्यंसर्व
देवत्यसर्वदेवात्मकोनलः सर्वदेवाद्यकोविप्रः सर्वदेवात्मकोहरिः संस्मरेन्निरृतिंश्यामंसुमुखंनरवाहनं रक्षोधिपंखड्ग
हस्तंदिव्याभरणभूषितं प्रतिमापूजनार्थायवस्त्रयुग्मंप्रकल्पयेत् पंकजंकारयेद्धीमान्रक्ताभैर्व्रीहितंदुलैः चतुर्विंशद्दलो
पेतंमुक्तैर्वाकर्णिकान्वितं तस्योपरिन्यसेत्पात्रंसौवर्णंरूप्यमृण्मयं शुद्धवस्त्रेणसंस्थाप्यतत्रमूलानिनिक्षिपेत् मूल
निखातमूलानितानिच स्वयमुत्पाटयेत्प्राज्ञोमूलानांचवशीपिता मंगल्याश्चपवित्राश्चओषध्यःकथयाम्यहं लक्ष्म
णाश्रितमूलाचशिरीषोवेतसस्तथा सहकाम्बेतमूलाचविष्णुक्रांताथशंखिनी सर्पाक्षीमीननेत्राचपुत्रपाचीकृतांजली

पालाशोविप्रकश्चैवरोचनाचंदनद्वयं कस्तामांसीमुरीशोरंवालकंचतथामला गोजिव्हातुलशीदूर्वाशतपुष्पीसलांगली
ब्रह्मदंडीद्रोणपुष्पीप्रियंगुश्वेतसर्षपा पिप्पलीकाकजंघाचत्रापमार्गाह्नहूतथा ज्योतिष्मतीचगंधीरीनिर्गंधापूर्णकोशि
का भृंगाक्षमासुभद्राचगुडुचीसेंद्रवारुणी अलंवुकारुदंतीचवकदलीकेतकीतथा गोक्षुरशतपर्वाचअरिष्टकापराजि
ता [illegible] नरुद्राशतपर्वानिकुंभाचसुवर्चला अश्वगंधाहस्तिकर्णीहरिद्राद्वितयंतथा उदुंवोमधुकार [illegible] अश्वत्थोवकुल
स्तथा नष्टक्षीरास्वयामार्गोमंदारश्चातिमुक्तकः मालतीस्वर्णपुष्पाचश्रीपर्णीश्रीफलंतथा दर्भमूलं [illegible] वीरंमंदयंतीवि
कंकतः पाटलासुरदारुश्चअर्धसूदनिकस्तथा फलंमन्मथमूलस्यपलाशस्यचपल्लवाः रास्नान [illegible] समूलंसुरदारु॥
विदारिका श्वेतवीर्याश्वेतपाकानीलोत्पलंतथैवच नागकेशरमंदारीकुमारीचैवनिक्षिपेत् तीर्थांवुपंचगव्यंचगव्यंचसर्वौ
षध्यश्चकांचनं पथाक्षंभक्तोवापियासंमूलशतंशुभं क्षीरत्वचासमेतंचशतछिद्रघटेन्यसेत् शतमूलाशतावरी वेतसो
वंजुलः सहकारसहदेवीचश्वेतमूलापुनर्नवा मीननेत्रामत्स्याक्षीपुत्रधारीपुत्रजीवाः कृतांजलिनाम्हायाजोडाइति
प्रसिद्धाविल्वकोविल्वः चंदनद्वयेश्वेतपीतंच आमलाभूम्यामलकी गोजिव्हागजजीभीतिप्रसिद्धालांगलीकलिहारी
तिप्रसिद्धाब्रह्मदंडीअधःपुष्पाद्रोणपुष्पीकरंवुकः काकजंघाकाकांगी ज्योतिष्मतीमकंगुलागांधारीदेवगांधारीपूर्ण॥

कोशिकाकोशातकी मगक्ष्माशिग्रुः सुभद्रासारिका अलंबुकांतुंवीशतपर्वावचा अरिष्टिकानागवल्लाछिन्नरुहापिंडगुडु
चो शतपत्राकमलिनी निकुंभादंतिभिदः सुवर्चलासूर्यभक्ता हस्तिकर्णएरंड उष्ट्रावः पीलुः मधुकारोमधकः सर्जरावो
जकः अतिमुक्तकोम; धवी मालतीजाती स्वर्णपुष्पाकुशलीमदंतीपूषिका वैककः तश्रुवावृक्षः श्रीफलविल्वः आ
र्यसूदनिकापालकी मन्मथवृक्षः आम्रः सुरदारुदेवदारुः विदारिकामूष्माडी श्वेतवीर्पोगिरिकर्णी श्वेतपाकागुंजा
रोषाणिप्रसिद्धानि विष्णुकांतासहदेवीतुलशीतुशतावरी मूलानिमानिगृह्णीयाछतालामेविशेषतः स्थापयेत्कर्णि
कामध्येवस्त्रगंधाद्यलंकृतंकूर्चहेमजलोपेतंकुंभमौषधीसंयुतं कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदैवतं अधिप्रत्यधिदैवौ
तुदक्षिणोत्तरदेशयोः अधिदेवंयजेदादौज्येष्ठानक्षत्रदैवतं उत्तराषाढऋक्षादि अनुराधातमर्चयेत् इंद्रादीशानपर्यंतं
पूजयेत्स्वस्वनामतः स्वलिंगोक्तेश्चमंत्रैश्चप्रधानादीन्प्रपूजयेत् पंचामृतेनसंस्नाप्यआवाह्याथसमर्चयेत् उपचारैःषोड
डषभिर्यद्वापंचोपचारकैः रक्तचंदनगंधाद्यैः पुष्पैः कुसुमसितादिभिः मेषसंगादिधूपैश्चघृतदीपैस्तथैवच सुरापोलिक
मांसाद्यैर्नैवेद्यैरोदनादिभिः मत्स्यमाससुरादीनिब्राह्मणानांविवर्जयेत् सुरास्थानेप्रदातव्यंक्षीरंलवणमिश्रितं पाय
संलवणोपेतंमांसस्थानेप्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चयेत् पुष्पांतेतुसमभ्यर्च्यहोमंकुर्याद्यथोदितं

निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधिः हविर्गृहीत्वा विधिवन्नैर्ऋत्यैव ऋचा हुनेत् मोषुनः परापरेति पत्ते देवीति वा
पुनः पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतं समिदाज्यचरून्हुत्वा यथाशक्तिश्च संख्यया अधिदेवतयोश्चापि जुहुयात्स्व
स्वमंत्रतः चतुर्थ्यन्तैर्नमोन्तैश्च स्वाहान्तैः स्वस्वमंत्रकैः नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् कृणुष्वेति पंचदशा
भिर्जुहुयात्कृशरं ततः गायत्र्या जातवेदसे त्रियंबकमिति क्रमात् सीरायुंजेति तामग्निवास्तोष्पत्यस्त्विमेव च क्षेत्रस्य पति
नागणानामग्निदूतं ततथैव च श्रीसूक्तेन तथा विद्वान् समिदाज्यचरूननुक्रमात् अष्टोत्तरशतं वापि अष्टाविंशतिभिः क्रमा
त् अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः त्वं नः सोमेति जुहुयात्सायसंतु त्रयोदश चतुर्गृहीतमाज्यं च जातेरुद्रे
तिमंत्रतः स्रुवेण जुपादाज्यं महाव्याहृतिभिः क्रमात् हुत्वा स्विष्टकृतं पश्चात्सायश्विताहुतीर्हुनेत् आचार्यो यजमाने
वाग्नौ पूर्णाहुतिं हुनेत् समुद्रादिति सूक्तेन प्राजापत्यर्चा वा तथा पूर्णां दर्वी समप्तेरणैः पूर्णाहुतिं हुनेत् होमशेषं
समाप्याय वन्हिमार्गेऽपि बुधः कुंभाभिमंत्रणं कुर्याद्दक्षिणेनाभिमर्शयेत् मृत्युप्रशमनार्थाय जपेत्त्रियंबकं शतं रुद्रकुंभे
क्रमार्गेण रुद्रमंत्रैः पूजयेत् धूपं दीपं च नैवेद्यं कुंभपुष्पैर्निवेदयेत् प्रसादयेत्ततो देवमभिषेकार्थमादरात् तस्मि
न्काले ग्रहान्तिर्थं कर्तं संभूतिमिच्छता पृथक् प्रशस्तं तेनैव नक्षत्रेष्वास सहैव तु अभिषेकविधिं वक्ष्ये पूर्वाचार्यैरुदाहृतं

शां-म. भद्रासनोपविष्टस्ययजमानस्यऋत्विजः दारपुत्रसमेतस्यकुर्युः सर्वेभिषेचनं अक्षीभ्यामितिसूक्तेनपावमानीभिरेवच
६० आपोहिष्ठेतिनवभिर्यतइंद्रद्वयेनच सहस्राक्षऋचेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवाष्टमारोग्यमंत्र
कैः योसौवज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुक्
मेषवाहनः सप्तजिव्हः सदेवोग्निर्मूलदोषंव्यपोहतु योसौदंडधरोदेवोधर्मोमहिषवानः मूलजातशिशोर्दोषंव्य
पोहतुयमस्तथा योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः योसौपाशध
रोदेवोवरुणश्चजलेश्वरः नक्रवाहः प्रचेताख्योमूलोत्थंचव्यपोहतु योसौदेवोजगत्प्राणोमारुतोमृगवाहनः प्र
शामयतुमूलोत्थदोषंगंडांतमूलकं योसौनिधिपतिर्देवोगदाभृन्नरवाहनः मातापित्रोशिशोश्चैवमूलदोषंव्य
पोहतु योसौपशुपतिर्देवोपिनाकीवृषवाहनः आश्लेषामूलगंडांतदोषमाशुव्यपोहतु विघ्नेशः क्षेत्रपोदेवः गा
पिनाकीवृषवाहनः अश्लेषामूलपांडांतदोषमाशुव्यपोहतुः सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदः तत्कपोरभिषे
कंतुसर्वदोषोपशांतिदः सर्वकामप्रदंदिव्यंमंगलानांचमंगलं वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ततःशु
क्लांबरधरः भुक्तमाल्यानुलेपनः जजमानोदक्षिणाभिस्तोषयेदृत्विगादिकान् धेनुंपयस्विनींदत्वाआचार्या

दसवत्सकां निर्ऋतिप्रतिमां वस्त्रं कुंभं हेमं च दापयेत् ग्रहार्थवस्त्रप्रतिमां ग्रहहोतृषु दापयेत् श्रीरुद्रजापिने देयः कल्लोनड्वान्प्रप
लतः तत्कुंभवस्त्रप्रतिमास्तस्मै दद्यात्प्रयत्नतः इतरेभ्योपि विप्रेभ्यो शक्त्या दद्याच्च दक्षिणां उक्तालाभे ततो दद्यात् आचार्य ब्रह्म
ऋत्विजः तत्तन्मूल्यं प्रदातव्यं ज्ञात्वा वाथ प्रदापयेत् आचार्याय यदत्तं तद्द्वं ब्रह्मणे भवेत् सदस्याय च ब्रह्मणोर्द्धं ऋत्विग्भ्यश्च तद
र्धकं शक्त्या शिष्टेभ्यः प्रणम्याथ क्षमापयेत् दद्यादन्नं पायसादि ब्राह्मणान्भोजयेत्ततः अलाभे शांतिपं चात्रार्द्धं शक्तं तदभा
वतः सर्वं शांतेश्च पठनं ब्राह्मणैराशिषस्तथा गृह्य क्षमापयेद्विप्रान्निर्ऋतिः प्रियतामिति विधाने वर्तितेस्मिंस्तु ततः शांतिर्भवेत्ध्रुवं गं
डांतेष्वेवमेव स्यात्तु [illegible] सेवमेवतु समाष्टके द्वादशाहे कुर्याद्वै शांतिमादरात् अश्लेषाशांतावप्येवविधिः मूलशांतिप्रकारेण कुं
भे निक्षिप्य पूजयेत् कुंभोपरिस्थपात्रे तु आश्लेषाप्रतिमां यजेत् मूलोक्तेन विधानेन कुंभयोरभिमंत्रणमित्यादिभिरतिदेशात् अ
श्लेषाप्रतिमा सर्पाख्या अथ मूलाश्लेषाशांत्योः प्रयोगः नवकर्ता उक्तकाले मासपक्षाद्युल्लिख्य मम अस्य शिशोः कुमार्या वा मूलाद्य
पादादिजाश्लेषायां वा जन्म [illegible] सूचित पित्राद्यरिष्टशांत्यर्थं शांतिं करिष्ये इत्युक्त्वा गणेशपूजनस्वस्तिवाचनमातृकापूजाभ्युदयीका
नि कृत्वा आचार्यब्रह्मसदस्यान् ऋत्विजश्चाष्टौ षट् चतुरो वा वृत्वा यथाविभवमर्चयेत् अथाचार्यश्चाचार्यकर्म करिष्ये इति संकल्प्य यद
त्र संस्थितमिति सर्षपान्विकीर्य आपोहिष्ठेत्यादिभिर्भुवं प्रोक्ष्य [illegible] महि द्यौरिति स्पृष्ट्वा ओषधयः समिति द्रोणपरिमितव्रीह्यादि [illegible]

मितिगंधं ॐ षधीरित्योषधीरोषधयः संमितिपवान् कांडादितिदूर्वा अश्वत्थेवइतिपंचपल्लवान् फलवतीभिरिति
पंचत्वचः स्योनापृथिवीनिसप्तमृदोयाः फलिनीरितिफलं सहिरत्नानीतिपंचरत्नानिहिरण्यरूपइतिहिरण्यं गावउ
गोमूत्रं पुनर्मनेतिगोमयमाप्यायस्वेतिपयः दधिक्राव्णइतिदधितेजोसीत्याज्यंदेवस्यत्वेतिकौशकूर्चंमधुवातेतिमधुरत्ना
दुरितिशार्करांक्षिप्त्वायुवासुवासाइतिवस्त्रेणसूत्रेणवाकुंभकंठमावेष्ट्यपूर्णादर्वीतिपूर्णपात्रेणपिधायततः प्रागुदग्वाचतु
र्दिक्षुचतुरः कुंभान्मध्येचैकंप्रत्येकुमंत्राहृत्यापदार्थानुसमयेनजपार्थंसंस्थाप्यरौद्रकुंभेसौवर्णप्रतिमायांत्र्यंबकंवसिष्ठोरु
द्रोनुष्टुप्रुद्रावाहनेविनियोगः त्र्यंबकमितिरुद्रमावाह्यपूजयेत् ततरुद्रकुंभंस्पृष्ट्वैकत्विक् याजुषश्चेदुद्रैः [illegible] शिनीव
क्तर्वश्चैत्रोणिरुद्रसूक्तानिछंदोगाश्चेद्रुद्रसामानिजपेत् सूक्तसाम्नाज्यामकहिन्यष्टैकादशाहृति शक्तितोजपा कद्रुद्रा
येतिनवर्चस्यघोरकण्वोरुद्रोगायत्रीजपेत् २ इमापरुद्रायतवसेइत्येकादशर्चस्यकुत्सोरुद्रो आद्यानवजगत्यौत्स्यनुष्टुभौ
आतेपितरितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप्जपेविनियोगः सामानितु आवोराजानंवामदेवोरुद्रस्त्रिष्टुतमुष्टुहिभो
मोत्रीरुद्रस्त्रिष्टुप्भुवनस्यपतिमृजिश्वारुद्रस्त्रिष्टुप्जपेविनियोगः ततोन्यस्यऋत्विक्जपार्थंकुंभयंचकेप्राक्क्रमेणजपे
त् आशुःशिशानोइतित्रयोदशर्चस्येंद्रोप्रतिरथऋषिरिंद्रोदेवताचतुर्थ्याबृहस्पतिस्त्रिष्टुप्अंत्यानुष्टुप्जपेविनियोगः द

क्षिरो त्वमग्ने त्वमग्ने रुद्र इत्यनुवाकस्य हव्यवाह ऋषिः अग्न्यात्मा रुद्रो जगती जपे० पश्चिमे रक्षोहणो अग्न इत्यस्य वामदेवो
ग्निस्त्रिष्टुप् जपेदि० उत्तरे रक्षोहणमिति पंचविंशत्यांगिरसः वायुरग्निस्त्रिष्टुप् ततो मध्यकुंभे जपेत् त्र्यंबकं वसिष्ठो रु
द्रोनुष्टुप् त्र्यंबकं च पावमानमपि सकृज्जपेत् एवं षट्कुंभासक्तो रुद्रकुंभे चतुः प्रश्नवर्णा चेति कुंभद्वयं संस्थाप्य रुद्रीकादश्या
दिरुद्रकुंभं जपित्वा प्रतिरथ्यादीनि चत्वारि प्रश्नवर्णेषु त्र्यंबकमंत्रं पावमानीश्च मध्यमुखे जपेत् अथाचार्यो रुद्रकुंभान्नैर्
ऋत्ये स्थण्डिलेग्निं प्रतिष्ठाप्य तदीशान्यां नवग्रहस्थापनं कृत्वान्वाधानं कुर्यात् तद्यथा समिधद्रूपमादायास्यां मूलशांतौ देवता
परिग्रहार्थं अन्वाधास्ये ॥८॥ स्मिन्नन्वाहितेग्नौ इत्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा नवग्रहानधिदेवताप्रत्यधिदेवता लोक
पालविनायकादींश्च प्रत्येकममुकसंख्यया समिच्चर्वाज्यैः निर्ऋतिं प्रतिद्रव्यमष्टोत्तरशतसंख्यया इमं पञ्च प्रत्येकमष्टाविंश
तिसंख्यया घृताक्तपायससमिदाज्यचरुभिर्विश्वेदेवाद्याश्चतुर्विंशति ऋक्षदेवताः सापाश्च रुद्रजापिने कृष्णवृषं धेनुं वा घृतलाभे
तन्मूल्यं वा दत्वा स्वशक्त्या ऋत्विग्भ्यो दक्षिणां भूयसीं दत्वा नरपूजां कृत्वा पापान्विति विसृज्याचार्याय निर्ऋतिग्रहप्रतिमाकुंभा
दि रुद्रजापिने रुद्रप्रतिमां कुंभादि संकल्प्य पूर्वकं दत्वाग्निमभ्यर्च्य गच्छगच्छेति विसृज्य प्रातः तद्दिने दशावरान्ब्राह्मणान्भोजयि
त्वा शांत्याशीर्वाचयित्वा पायसस्मृत्येन्तु न्काासस्वजनो भुंजीतः इति भट्टनीलकंठकृतभास्करे शांतिमयूखे मूलाश्लेषशांतिप्रयो

ग्रां·म· ग: अथवैधृतव्यतीपातसंक्रांतिशांतयः शौनकः कुमारजन्मकालेतुव्यतीपातश्चवैधृतौ संक्रमश्चरवेस्तत्रजातोदारिद्य
६३ कारकः दरिद्राणीमहादुःखंव्याधिपीडासमुद्भवं अश्रियोमृत्युमाप्नोतिनात्रकार्याविचारणा स्त्रीणांचशोकदुःखंवसर्वेना
शाकरंभवेत् शांतिर्वापुष्कलाकार्यातस्यदोषोनकश्चन गोमुखप्रसवंकुर्याच्छांतिकुर्यात्प्रयत्नतः जयाभिषेकदानैश्च
होमादपिविशेषतः नवग्रहमखंकुर्यात्तस्यदोषोपशांतये प्रथमेगोमुखंजन्मततः शांतिंसमारभेत् गृहस्यपूर्वदिग्भा
गेगोमयेनानुलिप्यत् अलंकृतेसुदेशेतु व्रीहिराशिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्धंतंदुलेनच [illegible]दर्धंतुतिलैः
तुर्यांदन्योपिपरिकल्पयेत् द्व्यत्रितयराशौतुअष्टपत्रंलिखेद्बुधः पुण्याहंवाचयित्वातुआचार्यंवृणुयात्सुरा आचार
वंतधर्मज्ञंकुलीनंचकुटुंबिनंमंत्रतत्वार्थतत्वज्ञंशांतिकर्मणिकोविदं पंचांगभूषणादद्यात्सदवस्त्रांगुलीयकं राशौप्र
तिष्ठितंकुंभमव्रणंसमनोहरं तीर्थोदकेनसंपूर्यसमृदौषधीपल्लवं सगंधागधरंतंचवस्त्रयुग्मेनवेष्टमुख्यमेव तत्र
अंतुर्विंशाद्दलेषुप्रागादितोविश्वेदेवाः १ विष्णुः २ वसवः ३ वरुणः ४ अजैकपात् ५ अहिर्बुध्न्यः ६ पूषा ७ अश्विनौ
८ यमः ९ अग्निः १० प्रजापतिः ११ सोमः १२ रुद्रः १३ अदितिः १४ बृहस्पतिः १५ सर्पाः १६ पितरः १७ भगः १८ अर्यमा
१९ सविता २० त्वष्टा २१ वायु २२ इंद्राग्नी २३ मित्रः २४ इंद्रः २५ निर्ऋतिः २६ आपः अश्लेषाणांतौ २७ इत्येताश्चतुर्थ्यंतै

नमोन्तैनामभिः क्रमेणावाह्य पूजयेत् आश्लेषासु नमोनुसर्पप्रतिमानमोस्तु सर्वेभ्य इत्यावाह्य सर्पारक्तास्त्रिनेत्रश्च द्विभुजः
पीनदस्त्रकः फलकासिधरस्तीक्ष्णोदिव्याभरणभूषित इति ध्यात्वा तद्दक्षिणतो बृहस्पतेरगस्त्यमदो बृहस्पतिस्त्रिष्टु
प् इति बृहस्पतिं नदुत्तरतश्चोदीरतांश्चोदीरतां पुरांख स्वधा त्रिष्टुविति पितॄनावाह्य चतुर्विंशति दलेषु प्रागादितो भागा
घदित्यंतर्क्षदेवता आवाह्य पूजयेत् ततोन्वाधानक्रमेणापायसंचरुं छुसरान् अपपित्वाज्यभागांतं कृत्वा यजमानेन
क्तसर्वदेवतोद्देशेन द्रव्येत्यक्ते सर्त्विगन्वाधानक्रमेणार्क्षदेवतातत्तन्मंत्रैर्हुत्वा रक्षोहादीन्वक्ष्यमाणमंत्रैर्जुहुयात् तांश्च
कृणुष्वेति पंचदशर्चस्य वामदेवो रक्षोहा त्रिष्टुप् पक्तेर रहोमे विनियोगः एवं सर्वत्र गायत्र्या विश्वामित्रः सविता गायत्री
जातवेदसे कश्यपो दुर्गा त्रिष्टुप् त्र्यंबकं वसिष्ठो रुद्रोनुष्टुप् सीरायुंजंति बुधः कृत्विक्स्तुति गायत्री तामग्निवर्णा सौभरि दु
र्गा त्रिष्टुप् वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् अग्ने नय अगस्त्योग्निस्त्रिष्टुप् क्षेत्रस्य वामदेवः क्षेत्रपालोनुष्टुप् गणाना
जमदग्निर्मित्रावरुणौ गायत्री अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री हिरण्यवर्णामिति पंचदशर्चस्य कर्दमानंदचिक्लीते
दीरासुता ऋषयः श्रीदेवता आद्यास्त्रिष्टुभः तुर्या प्रस्तारपंक्तिः पंचमीषष्ठ्यौ त्रिष्टुभौ सप्ताष्टावनुष्टुभौ त्यामप्रस्तारपंक्तिः प्रत्यृचं स
मिदाज्यचरुहोमे विनियोगः त्वंनः सोम विश्वतो वयोधा इत्यस्य प्रगाथः सोमस्त्रिष्टुप् पायसहोमे वि० त्वंनः सोम विश्वतो रभ

क्षाएजन्तिनिवा पात्ते रुद्रेतिकश्यपोरुद्रः स्वराडनुष्प्‌ चतुर्गृहीताज्यहोमे॰ सप्तमहाव्यात्हतीनांविश्वामित्रादयऋषयोऽग्न्याद
योदेवतागायत्र्यादिनिछंदांसि आज्यहोमे॰ भूः भुवः स्वः महः जनः तपः सत्यं एवंहुत्वास्विष्टकृदादिप्रायश्चित्ताहुत्यंतंकृ
त्वालोकपालनवग्रहविनायकादिभ्योनिर्ऋतीद्रादिभ्योरुद्रक्षेत्रपालपोश्चबलीन्दत्वापूर्णाहुतिंजुहुयात्तत्रमंत्रः समुद्रादू
र्मिरित्येकादशर्चस्यवामदेवआयस्त्रिष्टुप्‌ अंत्याजगतीप्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप्‌ पूर्णादर्विविश्वेदेवाः पा
तऋत्तुनुष्टुप्‌ सप्तते अग्नेसप्तवानग्निर्जगतीपूर्णाहुतिहोमेवि॰ एवंसर्वत्र ततोहोमशेषंसमाप्यप्रधानकुंभदक्षिणतःस्थ
श्वाशतवारंत्र्यंबकमंत्रंजपित्वा तथैवरुद्रकुंभंचस्पृष्ट्वोक्तरीत्यारुद्रैकादशिन्यादिजपित्वागंधादिभिः कुंभद्वयगतनि
र्ऋतिरुद्रावभ्यर्च्यऋत्विगाचार्यः सर्वकुंभोदकैर्भद्रासने नोपविष्टंसापत्यकलत्रंयजमानंअभिषिंचेत्‌ तत्रमंत्राः अक्षीभ्या
मितिषण्णांकाश्यपोयक्ष्महानुष्टुप्‌ अभिषेकेवि॰ एवमुत्तरत्र पवस्वविश्वचर्षणइतित्रिशार्चस्यशतवैखानसाः पवमानसो
मोगायत्री आपोहिष्ठेतिनवर्चस्यांबरीषः सिंधुद्वीपआपोगायत्री अंत्योद्वेनुष्टुभौपंचमीवर्धमानासप्तमीप्रतिष्ठायतद्वेद्रे
तिद्वयोः सप्तऋषयोविश्वेदेवाअनुष्टुप्‌ सहस्राक्षेतितृचस्यप्राजापत्योः यक्ष्मनाशनोयक्ष्महात्रिष्टुप्‌ द्वयोरंत्यानुष्टुप्‌ देवस्य
त्वेतित्रिभिर्यजुर्भिश्च यज्जाग्रतेतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्भर्गस्त्रिष्टुप्‌ योसौवज्रधरोदेवोमहेंद्रोगजेवाहनः

मूलजातशिशोदोषंमातापित्रोर्व्यपोहतु योसौप्रतिपरोदेवोहुतभुङ्मेषवाहनः सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्यपोहतु॥
योसौदंडधरोदेवोधर्मोमहिषवाहनः मूलजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतोराक्षसाधिपः प्रशाम
यतुमूलोत्थंदोषंगंडांतसंभव योसौपाशधरोदेवोवरुणाश्चजलेश्वरः नक्रवाहः प्रचेतानोमूलोत्थाघंव्यपोहतु योसौ
देवोजगत्प्राणोमारुतोमृगवाहनः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः योसौनिधिपतिर्देवोखड्गभृद्वाजिवाहनः
मातापित्रोः शिशोश्चैवमूलदोषंव्यपोहतु योसौपशुपतिर्देवः पिनाकीवृषवाहनः अश्लेषादोषगंडांतदोषमाशुव्यपोह
तु विघ्नेशः क्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदुःखप्रशमनंसर्वंकुर्वंतुशांतिदाः आश्लेषाप्रांतेतोतु आश्लेशाऋ
क्षजातस्यमातापित्रोर्धनस्यच भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु योसौवागीश्वरोनाम अधिदेवोबृहस्पतिः माता
पित्रोः शिशोश्चैवगंडांतंसव्यपोहतु पितरःसर्वभूतानांदोषंसर्वंव्यपोहतु सर्पेनसत्रजातस्यवित्तंवज्ञातिबांधवानइति
विशेषः ततः तत्तंयोःशंपुर्विश्वेदेवाः शाकरी अभिकः ततोवस्त्रांतरितनिर्ऋतिरुद्रकुंभोदकेनस्नापितोयजमानोधृत
धौतवस्त्रोसापत्यकलत्रः कांस्यपात्रस्थाज्यरूपंरूपमिति अवेक्ष्यविप्रायदत्वाचार्यादीन् अभ्यर्च्य आचार्योपर्णाग्रत्स्नणेवृषं
सदऋष्टाष्टसंख्यपापापसेनरक्षोहणोकृणुष्वेतिषट्चदशाभिः रूपशान्नेनसवितारंदुर्गांरुद्रं ऋत्विक्स्तुतिंवास्तोष्पतिं अग्नि

शां॰म॰ क्षेत्राधिपतिं मित्रावरुणौ अग्निमेताश्चाष्ट संस्थाप्य कृशरान्नेन प्रियंहिरण्यवर्णामिति पंचदशभिः प्रस्तृवमष्ट संस्थाप्यास
६५ मिदाज्यचरुभिः सोमं त्र्यपोदशवारं पायसेन रुद्रं चतुर्गृहीतेनाज्येन अग्निं वायुं सूर्यं बृहस्पतिं वरुणमिंद्रं विश्वांदेवान्म
हाश्चात्इति राज्येन शेषणास्विष्टकृतमित्यादि रुधोपक्षेपइत्यंतमुक्त्वा समस्तव्याहृतिभिः समिनद्धपमयावाद्ध्यात् अ
श्वभाग्यांतौ तु सर्पान् प्रधानदेवतामधिदेवतां बृहस्पतिं प्रत्यधिदेवतां पितॄन् भगाद्यदित्यंतर्क्षदेवताश्चेति विशेषः ततः प
रिसमूहनादि पूर्णपात्रनिधानांतं कृत्वाग्नेः प्रागुदग्वारकैः भुक्त्वैर्वा तंदुलैश्चतुर्विंशाद्दलं पद्मं कृत्वा तत्र भागवतं कुंभं सं
स्थाप्य तस्मिन्पा ॐ षधीरितिशतमूलानि तदलाभे विष्णुक्रांता सहदेवी तुलसी शतावरी कुशमूलं निक्षिप्य पूर्णपात्रं नि
धाय तत्र साष्टदलं वासोवितत्य तत्कर्णिकायां निष्कं तदर्द्धं तदर्द्धं मितां प्रतिमां निर्ऋतिं अग्न्युत्तारणपूर्वकं पंचामृतस्नाप
यित्वा मोषुणो घोरः कण्वो निर्ऋतिर्गायत्री मोषुण इति संस्थाप्य संस्मरेन्निर्ऋतिं श्यामं समुखं नरवाहनं रक्षोधिपं खड्गह
स्तं दिव्याभरणभूषितमिति ध्यात्वा तद्दक्षिणतः इंद्रं वो मधुच्छंदा इंद्रो गायत्री तीद्रस्य तदुत्तरतश्चामुमेमेधातिथिरापोनुष्टुवि
त्यपां च सौवर्णप्रतिमां संस्थाप्य पदार्थानुसमयेन स्वस्वमंत्रैः स्तापूजयेत् तत्र वस्त्रयुग्मं रक्तचंदनं कृष्णपुष्पाणि मेषशृंगस्य
धूपः आज्यस्य दीपः पोलिकौदनादि नैवेद्यं ब्राह्मणानां सुरास्थाने सघवमिश्रक्षीरं मांसस्थाने लवणमिश्रं पायसंसत्रिपादीनां

नुयेत् तस्योपरिन्यसेत्ताम्रं सूक्ष्ममव्रणं संपुटं प्रतिमां स्थापयेद्धीमान् साधिप्रत्यधिदेवतां चंद्रादित्याकृतिं पार्श्वे मध्ये वै ध्रुति
मर्चयेत् एवमेवव्यतिपातेषांगेसंक्रमणास्य च भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् निष्कमात्रेण वार्द्धेन पादेनापि स्व
शक्तितः प्रतिमां कारयेद्धोमांस्तत्र लक्षणलक्षितां प्रतिमापूजनार्थाय वस्त्रयुग्मे निवेदयेत् अधिदेवो भवेत्सूर्यो थ चंद्रः प्रत्यधि
देवता ततो व्यास्तृति पूर्वेणाज्जनमंत्रेण पूजयेत् त्रैयंबकेन णामंत्रेण प्रधानप्रतिमां यजेत् तत्सूर्यमितिमंत्रेण सूर्यपूजां समा
चरेत् आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् उपचारैः षोडशभिर्वा पंचोपचारकैः अर्चिता गंधपुष्पाद्यैः फलैर्नैवेद्यसमर्पि
येत् मृत्युंजयेन मंत्रेण प्रधानप्रतिमां स्पृशेत् अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा अष्टाविंशतिवा वाथ पूजायां च स्व
शक्तितः सर्वसौरं जप्यायसोमाय सोममंत्रतः आनो भद्रेति सूक्तं च भद्रा अग्ने च सूक्तकं जपेत् पौरुषसूक्तं त्र्यंबकं ततः
कुंभस्य च चतुर्दिक्षु जपं कुर्युस्त्वृत्विजः कुंभस्य पश्चिमे देशे स्थंडिलेग्निं प्रकल्पयेत् स्वगृह्योक्तविधानेन कारयेत्संस्
कारं स्वं त्र्यंबकेन मंत्रेण समिदाज्यचरून् हुनेत् अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तथा अष्टाविंशतिं वा कुर्यात्स्वस्य शक्त्या
नुसारतः मृत्युंजयेन मंत्रेण तिलहोमं समाचरेत् ततः स्विष्टकृतं हुत्वा अभिषेकं तु कारयेत् समुद्रज्येष्ठा मंत्रेण आपो हि
ष्ठा त्र्यचेन च अक्षीभ्यां मितिसूक्तेन पावमानीभिश्च त्र्यंबकेन तत्सूर्यं आप्यायस्वेति मंत्रतः युवा सुवासा इति मंत्रेण अभि

षेकं समाचरेत् सुरास्त्वामभिषिंचंतीत्यादिकोभिषेकमंत्रसमुदायो पुत्रहोमविधाने द्रष्टव्यः अभिषेकाप्लुतंवस्त्रमाचार्याया
निवेदयेत् श्वेतवस्त्रधरोभूत्वाभूषणाद्यैरलंकृतः यजमानः स्त्रियापुत्रैः आज्यावेक्षणमाचरेत् आचार्यंपूजयेत्तस्यश्चादस्तहे
मांगुलीयकैः गोदानेवस्त्रदानंचस्वर्णदानंविशेषतः तद्दोषपरिहारायजाचार्यायप्रदापयेत् प्रच्छादनपटं दद्यात्ततः शांतिभवे
दिति जापकेभ्योब्राह्मणेभ्योदक्षिणाः प्रतिपादयेत् दीनांधकृपणेभ्यश्चप्रदद्याद्भूरिदक्षिणां ब्राह्मणान् शत
संख्याकान् मिष्टान्नैर्भोजयेच्चतान् बंधुभिस्सहभुंजीतयथाविभवसारतः एवंयः कुरुतेमर्त्योनैवदुःखमवाप्नुया
त् आयुरारोग्यमैश्वर्यंमातापित्रोः शिशोरपि अथप्रयोगः कर्तागोमुखप्रसवंकृत्वामासपक्षाद्युल्लिख्यास्यशिशोर्वै
धृतिव्यतीपातसंक्रांत्यमावास्योत्पत्त्यासूचितस्यारिष्टनिरासार्थं शांतिकरिष्यइतिसंकल्प्य गणेशपूजांस्वस्तिवाचनमातृका
पूजांवृद्धिश्राद्धाचार्यादिवरणानिकुर्यात् अथाचार्यः सर्षपविकिरणानिकृत्वाप्राच्यांगोमयोपलिप्तभुविपंचद्रोणात्त
दर्धार्धमितानुक्रमात् व्रीहितंदुलतिलान्नन्योन्योपरिराशीकृत्यतत्राष्टदलंविरच्यतत्कर्णिकायांकुंभंसंस्थाप्यतीर्थोदकेना
पूर्यतत्रसप्तमृत्स्नांचपल्लवपंचरत्नपंचगव्याश्वगंधसर्वौषधीः क्षिप्त्वावस्त्रयुग्मेनावेष्ट्यपूर्णपात्रंनिधाय वैधृतव्यतिपातशां
तौमध्येत्र्यंबकमितिरुद्रंतद्दक्षिणेतत्सूर्येतिसूर्यमुत्तरतश्चाप्यायस्वेतिसोमं संक्रांतिशांतौमध्येसूर्यंतद्दक्षिणेतोग्निंदूतमि

म

सप्तिमुत्तरतो रुद्रं तन्नत्यतिमासावास्य षोडशाभिः पंचभिर्वोपचारैः संपूज्य रुद्रसोमसूर्यप्रतिमाः स्पृष्ट्वाष्टसहस्राष्टशताष्टवि
शतिश्चान्यतमसंख्यया मृत्युंजयमंत्रमुग्रन्यघेत्यादि सर्वे सौरमंत्रानाप्यायस्वेतिच क्रमाज्जपेत् संक्रांतिशांतौ तु पूर्वं सौरज
पस्ततो मृत्युंजयजपः ततः ऋत्विजः प्रागादि दिक्क्रमेणानोभद्राभद्राश्चये सहस्रशीर्षाकद्रुद्रायेति सूक्तानि जपित्वाकुं
भास्थिमेर्निसंस्थाप्य ग्रहावाहनादि पूजांतं कृत्वा वादध्यात् तत्र चक्षुषी आज्येनेत्यंते रुद्रसूर्यसोमान् समिच्चर्वाज्यैस्त
न्मंत्रैर्मृत्युंजयमंत्रेण च तिलाहुतिभिरष्टसहस्राष्टाशताष्टाविंशत्यान्यतरसंख्यया शेषेण स्विष्टकृतमित्यादि संक्रांतिशांतौ
तु सू[illegible]ग्निरुद्रानिति विशेषः ततः आज्यभागांते [illegible]त्वाधानक्रमेण हुत्वा बलिदानांते कलशोदकैः समुद्रज्येष्ठा इति सूक्तेना
पो हि ष्ठेति तु चेनाश्वीभ्यामिति सूक्तेन पावमानीभिः प्रधानाधिप्रत्यधिदेवतामंत्रैः सुरास्त्वेत्यादिपौराणिकमंत्रैः श्चाभिषि
तो [illegible]जमानो भिषेकं वस्त्रमाचार्याय निवेदयेत् आज्यमवेक्ष्य पूर्णाहुतिं हुत्वा आचार्याय धेनुं वस्त्रयुग्मांगुलीयकादिकं त्विग
भ्यश्च दक्षिणां दत्वान्येभ्यश्च भूरिदक्षिणां दत्वा [illegible] यत्या वा ब्राह्मणान्भोजयित्वा बंधुभिः सह भुंजीतेति वैधृतौ व्यतिपात
संक्रांतिशांतयः अथैकनक्षत्रजन्मशांतिः गार्ग्यः एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस
निश्चयः तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्यात् अभि सेचनं वा संपुज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपं तत्र शां

शां॰मं॰ तिंप्रवक्ष्यामिसर्वा[illegible]यत्नेनतु शुभर्क्षेशुभवारेचंद्रताराबलान्विते रिक्तारविष्टीवर्ज्येतुप्रारंभेदिवसेसुधी आचार्यंवरये
६७ त्पूर्वंचतुरश्चद्विजोत्तमाः पुण्याहंवाचयित्वातुशांतिकर्मसमाचरेत् अग्नेरीशानदिग्भागेनक्षत्रप्रतिमांततः तत्तन्नक्षत्रमं
त्रेणअर्चयेत्कलशोपरि रक्तवस्त्रेणसंछाद्यवस्त्रयुग्मेनवेष्टयेत् स्वगृह्योक्तमार्गेणकुर्यादग्निमुखंततः तन्नक्षत्रमंत्रे
णजुहेनदृशोत्तरंशतं प्रत्येकसमिदन्नाज्यैः प्रायश्चित्तांतमेवच ॥ अभिषेकंततःकुर्यादाचार्यः पितृपुत्रयोः वस्त्रालंकारगो
दानेनाचार्यंपूजयेत्पुनः ऋत्विजांदक्षिणांदत्वाभाषत्रयसुवर्णकं देवताप्रतिमादानेधान्यवस्त्रादिभिः सह यानशय्या
सनादीनिदद्यात्तद्दोषशांतये भोजयेद्ब्राह्मणान्सर्वान् वित्तशाठ्यविवर्जितः अथप्रयोगः कर्तामासपक्षाद्युल्लिख्यास्य
शिशोः पित्राद्येकर्क्षोत्पत्तिसूचितारिष्टशांत्यर्थंएकनक्षत्रशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनस्वस्तिवाचनांभ्यु
दयिकाचार्यर्त्विग्वरणानिकुर्यात् अथाचार्योग्नेरीशान्यांकुंभंसंस्थाप्यरक्तवस्त्रयुग्मेनसंछाद्यतस्मिन्पूर्णपात्रोपरि
तत्तन्नक्षत्रदेवतामावाह्यरक्तवस्त्रद्वयेनाछाद्यसंपूज्यप्रतिष्ठाप्यान्वाधायाज्यभागांतंकृत्वातत्तन्नक्षत्रमंत्रेणसमिच्चर्वा
ज्यानिप्रत्येकंअष्टोत्तरशतंहुत्वाहोमशेषंसमाप्यशिशुंतत्पित्रादींश्चाभिषिंचेत् ततः कर्तोत्तरपूजांकृत्वाविसृज्यप्र
तिमादिकंगवादिकंचाचार्यायदत्वाऋत्विग्भ्यश्चप्रत्येकंसौवर्णमाषत्रयात्मिकांयथाशक्तिर्वादक्षिणांदत्वायथाविभवं

पानशयासनादीनि च दत्वा ब्राह्मणान्भोजयित्वा स्वयं भुंजीत इति एकनक्षत्रशांतिप्रयोगः अथ ग्रहणोत्पातौ शांतिः शौनकः ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः व्याधिपीडा च दारिद्र्यं शोकं च कलहो भवेत् शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया यस्मिन्नृक्षे विशेषणाग्रहणं संप्रजायते तदृक्षाधिपतेरूपं सुवर्णेन प्रकल्पयेत् यथाशक्त्यानुसारेण वित्तशाठ्यं न कारयेत् सूर्यग्रहे सूर्यरूपं सुवर्णेन विशेषतः इंदुं चेद्ग्रहे धीमान् रजतेन विशेषतः राहुरूपं प्रकुर्वीत नागेनैव विशेषतः नागेन सीसेन शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् तस्योपरि न्यसेद्धीमान् नववस्त्रं सुशोभनं रूपाणां चैव रूपाणां स्थापनं तत्र कारयेत् रक्ताक्षतं रक्तगंधं रक्तपुष्पाणि वराणि च सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकराय च श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिभिः चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकराय च राहवे चैव दातव्यं कृष्णपुष्पाणि वराणि च दद्यान्नक्षत्रनाथेभ्यः श्वेतगंधानुलेपनं सूर्यं संपूजयेद्धीमान् आकृष्णेनेति मंत्रतः ॥ चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च समिद्भिर्जेत्तरक्षे त्विमे आपजुहुयाद्बुधः मे शायनक्षत्राधिपतये आज्येन चरुणा चैव तिलैश्च जुहुयात् ततः पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः जलै रोषंध कल्कैश्च सहितैः कलशोदकैः ५ औषधकल्कैः सर्वौष

पर्वं॰।?

घृकल्कैः अभिषेकं प्रकुर्वीत यजमानो प्रयत्नतः मंत्रैर्वारुणदेवत्यैरापोहिष्ठादिभिः इमंमेगंगे पितरस्तत्वायामीतिमंत्रकैः
अभिषेके निवृत्ते तु यजमानः समाहितः आचार्यं पूजयेत्पश्चात्तु शांतो निर्यतेंद्रियः तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयं दक्षि
णाभिश्च संयुक्तं यथाशक्त्यानुसारतः ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् तेभ्योपि दक्षिणां दद्याद्यजमानः समाहितः
अनेन विधिना शांतिं कृत्वा सम्यग्विधानतः अकालमृत्युशोकं च व्याधिपीडां च नाप्नुयात् सौख्यं सौमनस्यं नित्यं सौभाग्यं लभ
ते नरः इत्थं ग्रहणात्तानानां सर्वारिष्टविनाशनं कथितं भार्गवेणेदं शौनकाय महात्मने इति चंद्रसूर्यग्रहणप्रसूतिशांतिः
अथ विषघटिकाशांतिः तत्र वृद्धगार्ग्यः विषनाड्यां सुसंजातः पितृमातृधनात्मनां नाशकृद्विषशस्त्राद्यैः क्रूरलग्ने ष्टमे पिवा
तद्दोषपरिहाराय शांतिकर्म समारभेत् रुद्रोयमोग्निमृत्युश्च देवताः परिकीर्तिताः सुवर्णेन यथाशक्त्या तत्तल्लक्षणसंयुताः
प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थलैः स्थंडिले परिकल्प्याथ कुंभमोषधसंयुतं जलैः संपूर्य संस्थाप्य मृदादि प्र
क्षिपेत्ततः वस्त्रद्वयेन संवेष्ट्य पंचरत्नानि निक्षिपेत् कुंभोपरि तु संस्थाप्य वतस्ताः प्रतिमास्तथा ततन्मंत्रैश्च संपूज्य गंध
पुष्पोपहारकैः कद्रुद्रायेति मंत्रेण यमाय सोममित्यथ अग्निर्मूर्द्धेति मंत्रेण परं मृत्यो इतित्रय एतैश्चतुर्भिर्मंत्रैस्तु क्रमा
द्वै हुनेत्तथा समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमं ऋत्विग्भिश्च सहाचार्यो हुनेदष्टसहस्रकं अष्टोत्तरशतं वापि अष्टा

विंशतिमेववातत्तस्तिलैः नद्देवांस्ततन्मंत्रैश्चकल्पवित् ततोभिषिंचेद्देनं मंत्रैः पौराणिकैः क्रमात् प्रार्थ्यतांभगवानीशः
पिनाकीसर्वतोमुखः तवमूर्तिप्रदानेन समस्ताभीष्टदोभव इंद्रप्रत्यीतोयमः कलोदंडहस्तः प्रशांतधीः रक्तदृक्पाशधृ
त्कालोमहिषस्थशिवंकुरु॥ पिंगलश्मश्रुकेशांतः पिंगाक्षश्चतुरोरणः छागस्थः साक्षसूत्रश्रुवसमार्चिः शक्तिधारकः
तवमूर्तिप्रदानेनममयापंव्यपोहतु दंष्ट्राकरालवदनोनीलांजनसमाकृतिः धृतखड्गगदापाणिर्मस्तुमेपातुसर्वदा इत्य
मेवंविधैर्मंत्रैर्यथाविधिसमाहितः गोभूहिरण्यवस्त्रैश्चआचार्यंपूजयेत्सुधीः एवंकुर्यात्प्रदानेनविषदोषंप्रशाम्य
ति इतिविषघटिकाशांतिः अथभगंडांतशांतिः गर्गः अश्विनीमघमूलादौत्रिवेदनवनाडिका रेवतीसार्पशाक्रांतेमा
सवद्दरसाक्रमात् अश्विनीमघमूलादौनाडिकाद्वितयंतथा अश्विनीमघमूलानांपूर्वार्द्धंवध्यतेपिता पूषादिसर्पपश्चा
र्द्धेजननीवाध्यतेशिशोः पित्रघ्नस्तुदिवाजातोरात्रिजातस्तुमातृहा आत्महासंध्ययोर्जातोनास्तिगंडेनिरामयः सर्वे
षांगंडजातानांपरित्यागोविधीयते वर्जयेद्दर्शनंतस्यपावत्षाण्मासिकंभवेत् तस्यशांतिप्रवक्ष्यामिसोममंत्रेणमंत्रि
मान् कांस्यपात्रंप्रकुर्वीत्पलैःषोडशभिर्नव [illegible]शभिश्चचतुर्भिश्चद्वाभ्यांवाशोभनंतथा तन्मध्येपापसंमुद्भंनवनी
तेनपूरितं राजतंचंद्रमंचैतसितपुष्पसहस्रकैः देवन्नक्षौमंवासश्चशुक्लंमाल्यांवरार्चितः सोमोहमितिसंचिंत्यपूजां

मू॰ म॰ ६९

कुर्वीदत्तं द्विजः जपेत्सहस्रकं मंत्रं श्रद्दधानः समाहितः आप्यायस्वेति मंत्रेण पूजां कुर्यात्समाहितः दद्याद्दक्षिणां विप्रेभ्यो गं
डदोषप्रशांतये शुक्लां धेनुं गां भव्यां चैव ताम्रपात्रसमन्वितं गंडदोषोपशांत्यर्थं दद्याद्वेदविदे शुचिः इति भगंडांत शांतिः
अथ दिनक्षयादि शांतिः गर्गः दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ मूले गंडे तिगंडे च परिघे यमघंटके कालदंडे
मृत्युयोगे दुष्टयोगे सुदारुणे तस्मिन्गंडदिने प्राप्ते प्रसूतिर्यदि जायते अतिदोषकरी प्रोक्ता तत्र पापयुते सति विचार्य
दैवज्ञं तथा शांतिं कृत्वा यथाविधि यजमानो देवतानां ग्रहाणां चैव पूजनं दीपं शिवालये भक्त्या घृतेन परिकल्पयेत् अ
भिषेकं शंकरस्य अश्वत्थस्य प्रदक्षिणा आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनं गुरुदैवतविप्राणां पूजनं गोत्रवर्द्धनं
पुत्रपौत्रतुष्टिलाभार्थं अभीष्टफलसिद्धये सर्वारिष्टहं यत्नं समाचरेत् शिवाय विधिवद्भक्त्या दीपदानं करोति यः अखं
डं गोघृतेनैव स मृत्युं जयेन्नरः विष्णुमूर्तिमहापुण्यामश्वत्थश्रीकरं सदा प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युं जयेन्नरः सर्वं
तपस्त्यागार्थं नित्यकल्याणवृद्धये अभीष्टफलसिध्यर्थं कुर्याद्ब्राह्मणभोजनं अभिषेकं शिवे शांतिः कृत्वा भक्त्या नरो
नमः अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभं शांतिजाप्यं रुद्रजाप्यं कृत्वा मृत्यु
जयो भवेत् मूले वा सर्पगंडे वा कुर्यादेतानि यत्नतः आयुर्वृद्धिकरार्थाय गंडदोषप्रशांतये इति गर्गोक्तगंडदोषशांतिः॥

अथत्रिकशांतिः शांतिसर्वस्वे सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् ज्येष्ठ
नाशो धने हानिर्दुःखं वा सुमहद्भवेत् तत्र शांतिं प्रकुर्वीत शाठ्यवित्तविवर्जितः जातस्यैकादशाहे वा द्वादशाहे शुभे दिने आ
चार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरं सहवा ग्रहयज्ञः स्यात्स्वस्य वित्तानुसारतः ब्रह्मविष्णुमहेंद्रेशप्रतिमाः स्वर्णतः कृ
ताः पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्व
शः द्विज एको जपेद्धोमकाले भुवि समाहितः आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुं अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु
वा देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरं ब्रह्मा दिमंत्रैरिंद्रस्य पतइंद्र भयामहे ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः अ
भिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् हिरण्यं धेनुरेका वा त्वक्त्विजां दक्षिणा ततः प्रतिमा गुरवे देया उपस्कारसमन्विताः कां
स्याज्यवीक्षणं दत्वा शांतिपाठं तु कारयेत् ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च भोजयेत् एवं शांतिविधानेन सर्वारिष्टं
निरस्यते इति त्रिकशांतिः अथ वैकृतशांतिरुच्यते अकालप्रसवा नार्यः कालातीतप्रजास्तथा विकृतप्रसवाश्चैव यु
ग्मप्रसव नास्तथा अमानुषा अखंडाश्च अजातव्यंजनास्तथा हीनांगा अधिकांगाश्च जायंते यदि वा स्त्रियः पश्वः पक्षि
णश्चैव तथैव च सरीसृपः विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च तत्

कुर्यादनंदितः जपेत्सहस्रकंमंत्रंश्रद्दधानःसमाहितः आप्यायस्वेतिमंत्रेणपूजांकुर्यात्समाहितः दद्याद्देदक्षिणांभिष्टांगं
डदोषप्रशांतये शुक्लांवागोभ्वांचैववतताम्रपात्रसमन्वितं गंडदोषोपशान्त्यर्थंदद्याद्देद्विदेशुचिः इतिभगंडांतशांतिः
अथदिनक्षयादिशांतिः गर्गः दिनक्षयेव्यतीपातेव्याघातेविष्टिवैधृतौ मूलेगंडेतिगंडेचपरिघेयमघंटके कालदंडे
मृत्युयोगेदुष्टयोगेसुदारुणे तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते अतिदोषकरीप्रोक्तातत्रपापयुतेसति विचार्य
वक्तृदैवज्ञंशांतिंकृत्वायथाविधि यजमानोदेवतानांग्रहाणांचैवपूजनं दीपंशिवालयेभक्त्याघृतेनपरिकल्पयेत् अ
भिषेकंशंकरस्यअश्वत्थस्यप्रदक्षिणा आयुर्वृद्धिकरंजाप्यंसर्वारिष्टविनाशनं गुरुदेवतविप्राणांपूजनंगोत्रवर्द्धनं
पुत्रापुत्रसुशिवांस्यर्थं अभीष्टफलसिद्धये सर्वारिष्टहयत्नंसमाचरेत् शिवायविधिवद्भक्त्यादीपदानंकरोतियः अखं
डगोघृतेनैवसर्वमृत्युंजयेन्नरः विल्वमूर्तिमहापुण्यामश्वत्थंश्रीकरंसदा प्रदक्षिणनरोभक्त्याकृत्वामृत्युंजयेन्नरः सर्व
संपत्समृद्ध्यर्थंनित्यंकल्याणवृद्धये अभीष्टफलसिद्ध्यर्थंकुर्याद्ब्राह्मणभोजनं अभिषेकंशिवेशांतिःकृत्वाभक्त्यानरो
नमः अकालमृत्युर्निर्जित्यदोषांपुजांपतेनर गाणत्यपुरुषसूक्तंसौरंमृत्युंजयंशुभं शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्यु
जयोभवेत् मूलेवासर्पगंडेवाकुर्यादेतानियत्नतः आयुर्वृद्धिकरार्थायगंडदोषप्रशांतयेइतिगर्गोक्तगंडदोषशांतिः॥

अथत्रिकशांतिः शांतिसर्वस्वे सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् ज्येष्ठ
नाशो धनेहानिर्दुःखं वा सुमहद्भवेत् तत्र शांतिं प्रकुर्वीत शाठ्यविवर्जितः जातस्यैकादशाहे वा द्वादशाहे शुभे दिने आ
चार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरं सह वा ग्रहयज्ञः स्यात्तस्य वित्तानुसारतः ब्रह्मविष्णुमहेंद्रेशप्रतिमा स्वर्णातः कृ
ताः पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्व
शः द्विज एको जपेद्धोमकाले शुचिः समाहितः आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुं अष्टोत्तरसहस्रं वा शतं वा विंशतित्तु
वा देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरं ब्रह्मा दिर्ग्नैरिंद्रस्य पतइंद्र भयामहे ततस्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः अ
भिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् हिरण्यं धेनुरेका च वस्त्रद्विजादक्षिणा ततः प्रतिमा गुरवे देया उपस्कारसमन्विताः कां
सान्यवीक्षणं दत्वा शांतिपाठं तु कारयेत् ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च भोजयेत् एवं शांतिविधानेन सर्वारिष्टं
निरस्यते इति त्रिकशांतिः अथ वैकृतशांतिरुच्यते अकालप्रसवा नार्यः कालातीतप्रजास्तथा विकृतप्रसवाश्चैव यु
ग्मप्रसवनास्तथा अमानुषा अखंडाश्च अजातव्यंजनास्तथा हीनांगा अधिकांगाश्च जायन्ते यदि वा स्त्रियः पशवः पक्षि
णश्चैव तथैव च सरीसृपः विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च त

शां॰ न॰
८७

तोद्विजेंद्राः विकित्सतैर्ब्राह्मणात्तर्पणाश्च ततोस्य शांतिसमुपैति पापं इति वैकृतशांतिः अथ यमलशांतिः कात्यायगृह्ये अ
थातो यमलजनने विधिं व्याख्यास्यामो यस्य भार्या गौर्दासी माहिषी वडवा वा विकृतिं प्रसवेत्तस्या पश्चितिर्भवेत्तूर्णो दशाहे चतु
र्णां क्षीरवृक्षाणां काषायमुपसंहरेत् लक्षवटोदुंबराश्वत्थशमी देवदारु गौरसर्षपास्तेषामयो हिरण्य दूर्वांकुराम्ब्रयत्त्रवैर्ष्टोक
लशान्म पूर्वं सर्वौषधीनां दंपतीस्नापयित्वापोहिष्ठेति तिसृभिः कपानश्चित्रइद्वाभ्यां पंचेंद्रेण पंचवारुणेन इदमापः प्रवहतेत्यपाद्य
मिति स्नापयित्वालंकृत्य दर्भेषूपवेश्य तत्र मारुतं स्थालीपाकं० अपयित्वाज्यभागाविष्ट्वाज्याहुतिर्जुहोति पूर्वोक्तैः स्नपनमं
त्रैः स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुत्ताय स्वाहा मरुद्भ्यः स्वाहा यमाय
स्वाहांतकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाग्नये स्विष्टकृते स्वाहेत्येतद्देवगृहोत्पाते भूलूककपोतगृध्रः श्येनो वा मद्गृहं प्रविशे
त् स्तंभः प्ररोहेद्वल्मीके मधुजालं वा भवेदुदकुंभप्रज्वालनासनशयनयानभंगेषु गृहगोधिकाकृकलासशरीर सर्पणादृत्येवं
स्त्रैर्ध्वजविनाशेष्वन्येष्वुत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशांत्योक्तेन विधिना कृत्वा
आचार्याय वरं दत्वा ब्राह्मणान्भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शांतिर्भवति पंचेंद्राणि पदानि यस्मिन्नसौ पंचेंद्रो
मंत्र एवं पंचवारुणोपितो च प्रयोगे वक्ष्यति अथ प्रयोगः मम भार्यायायमलजननसूचितसर्वारिष्टशांतिद्वारा श्रीपरमे

मस्तुदकंमस्तुदकंप्रतिवृक्षमथापिवा स्थूलतर क्वचित्तुकूलमित्येवपरः अत्राम्नायामनुक्तायांप्राक्प्रोक्तानामनुसारतः प
त्रवारोचतेतत्रमातृणाद्वलिमाहरेत् कृत्वानीराजनांतेवलिमितिविधिवद्वालमाहृत्पतत्रसंस्थैश्याद्भिः समंत्रैशिरसिस
कुसुमैरक्षतैश्चैामपिवा क्षिप्त्वाग्नेदेवतायाविधिवदुपहितैस्तत्रगीतैः सुमंत्रैः कुर्याद्रक्षांसमीक्ष्यस्परणमिवविलपपातिदु
श्चग्रहार्तिः नीराजनमंत्रोऽङ्गिरोनारायणीये ब्राह्माविष्णुश्चरुद्रश्चस्कंदोवैश्रवणस्तथा रक्षन्तुत्वरितंवालंमुंचमुंचकुमारकं
फाल्गुणोत्तरे पलाशाश्वत्थकपित्थविल्वोदुंवरपल्लवा पंचभंगास्मृतास्तैस्तेवालानांहितकारकाः स्नापितंधूपितंवालंतनो
मुंचसिसायंही प्रयोगसारेऽपि पलाशोदुंवराश्वत्थविल्वन्यग्रोधपल्लवाः क्वथितेनकषायेनपरिषिंचेत्प्रशांतये परिषिंचेत्स्ना
पयेदितिमदनः अत्रमंत्रः ॐ नमश्चामुंडेइत्यादिवलिदानेपूर्वमुक्त रक्षामंत्रः प्रयोगसारे रक्षरक्षमहादेवनीलग्रीवज
टाधर ग्रहैस्तुसहितोरक्षमुंचमुंचकुमारकं अमुंमंत्रंभुर्जपत्रेविलिख्यतत्पत्रंभुजेवध्नोपादितिमदनः वालकशिखास्प
र्शपूर्वकंजपेन्मंत्रउक्तः प्रयोगसारे सर्वमातरइमंग्रहंसंकरन्तुहरोदय २ स्फोटय २ स्वाहागर्जे २ सागरह्ल २ आमर्दय २
ह्निम २ हन २ एवंसिद्धिरुद्रोज्ञापयतिस्वाहा अत्रहोमोऽपिप्रयोगसारे ॐ कूष्मांडिभगवतिसुरागिणि २ सुमंडितेमुं
च २ दह २ पचसर २ गच्छ २ स्वाहा २ कृत्वाचतुष्पथेकुंडंमंत्रेणानेनमंत्रवित् त्रिरात्रंपंचसप्तंवासहस्रंजुहुयात्तिलैः

शां·म· शांतिदुष्टग्रहाः शांतिं वलिना चानुमोदिताः वालरोदनपरिहारार्थं यंत्रमुक्तं प्रयोगसारे षड्दलमध्ये ह्रींकारं दलेन्मध्ये शिशोर्ना

७१ मविलिख्य षट्सु अस्त्रेषु ॐ ललुवे स्वाहा इति मंत्रस्य षडक्षराणि विलिख्य तद्वहिर्नेमिवद्दृत्तवद्दं तद्वपं विलिख्य तद्व

हिरघोमुखैर्द्दवं ईशावैश्यपंचोपचारैः संपूज्य वालहस्तेवध्नीयादिति अथ वालग्रहस्तवः प्रयोगसारे प्रणम्य शिरसा

शांतिगणेशानं तमीश्वरं वालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदं तपसा प्रभासा दीप्त्या च वपुषा विक्रमेण च निर्दिष्टो यः स

दास्कंदः सनोदेवः प्रसीदतु रक्तमाल्यांबरधरो रक्तगंधानुलेपनः रक्तादिसोज्वलः शांतः सनोदेवः प्रसीदतु योनंदनः

पशुपतेर्मान्यः पावकस्य च गंगोमाकृत्तिकानां च सनोदेवः प्र० देवसेनापरिवृतो देवसेनार्चितः सदा देवसेनापतिः

श्रीमान्शांतः शक्तिधरः प्रभुः कुमारः शिखिवाहनः सुरारिहा महासेनः सनोदेवः प्र० प्रकृत्या सुंदरोदांतो दैवैश्वर्यादिस

न्वितः नानाविनोदसंपन्नः सनोदे० प्रबोधा सुप्रबोधा च बोधना सुप्रबोधना प्रबुद्धा च प्रबोधा च सुप्रीता सुमनास्तथा म

नोरमेति विख्याता योगिन्यः पांतु वालकं सुपता रुक्मिणी चैव मंदवेगा विभीषणा विद्युज्जिह्वा महानासा शातानेदात

भापरा वालदा प्रमदा चैवेति योगिन्यः पांतु वालकं हरिणी चापवारणी वानरी क्रोष्टकी तथा कवेरी कोटराक्षी च कुंभकर्णी

च चंडेका वलाह्निकारिणि चेति योगिन्यः पांतु वालकं शुद्धा विशुद्धा श्रद्धा च योगसिद्धा मितंवदा सुभगा शुभदा गौरी वल्ला

भ्वरश्रीत्यर्थं कात्यायन परिशिष्टोक्तानि सग्रहमखापमलशांतिं करिष्य इति संकल्प्य गणेशपूजनाचार्यवरणांतं कुर्यात् ततः आ
चार्यो यदत्र संस्थितमिति सर्षपान्विकीर्य पूर्वस्यां पूर्वादिक्रमेणाष्टौ कलशान्मही द्यौरित्यादिनाक्षीरवृक्षिष्वकषायपल्लक्ष वटउदुंब
राश्वत्थशमी देवदारुशाखागौरसर्षपहिरण्यदूर्वांकुरपंचपल्लव सर्वौषधीः पुनान्स्थापयित्वा तज्जलेन यजमानं सपत्नीकं स्नाप
यित्वा तत्र मंत्राः आपोहिष्ठेति तिसृणा अंबरीषः सिंधुद्वीप आपो गायत्री अभिषेके वि० कयानश्चित्र इति द्वयोर्वामदेवो इं भ्
द्रो गायत्री अभि० त्रातारमिंद्रं गर्ग इंद्रस्त्रीष्टुप् अभि० वरुणस्येति वरुणस्योत्तंभनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्यऋ
तसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद अभि० दुरमापइत्यस्य सिंधुद्वीप आपोनुष्टुप् अभि० अ
पाघमपकिल्बिषमपकृत्यामपोरपः अपामार्गत्वमस्मदपदुःस्वप्न्यं सुव अभि० ततो वस्त्राद्यलंकृतोनोदपतीद भे ४५
शुउपवश्याचार्योऽग्निस्थापनं कुर्यात् ततईशान्यां ग्रहस्थापना तेन्वाधानं अस्मिन्नन्वाहिते ग्रावित्यादो उक्त्वा अत्रप्रधानं
ग्रहांस्तमिद्धविर्भिः अपस्त्विस्रभि इंद्रं तिस्रभिः वरुणमेकया अपोह्वाभ्यां आज्येन अग्निं सोमं पवमानं पावकं मारुतः य
मं अंतकं मृत्युं एकैकया चर्वाहुत्या शेषेण स्विष्टकृतमित्यादि ततोन्वाधानादिक्रमेण होमं समाप्य बलिदानपूर्णाहुति
भिरभिषेक दक्षिणादानांतं कृत्वा शतं ब्राह्मणान्भोजयित्वा स्वस्तिभवंतो ब्रुवंतु इति वाचयित्वा तैः स्वस्तीत्युक्ता तेभ्यः अ

त्रिषोगृह्णीयादिति अथब्राह्मणं तदाहुर्यआहिताग्निर्यस्यभार्यागौर्वायमौजनयेत्कातत्रप्रायश्चित्तिरिति सोग्नयेमरुत्व
तेत्रयोदशकपालंपुरोडाशंनिर्वपेतस्ययाज्यानुवाक्येमरुतोयस्यहिक्षयेराद्धवेदवरमाअवेहेवेत्याहुतिंवाहवनीयेजुहुयाद
ग्नयेमरुत्वतेस्वाहेतिसातत्रप्रायश्चित्तिरिति कारिका अथयस्यवधूर्गौर्वाजनयेद्धेयमौततः समरुत्यश्वकुर्यात्पूर्णाहु
तिमथापिवे इतियमलशांति अथप्रथमदिनादिषुदेवीगृहीतवालकरक्षणं मदनरत्नेपोगसारे प्रथमेहनिगृह्णा
तिवालकंवालिनीग्रही यापिनीग्रहीतिनारायणीतिपाठः गांधीनीतिपुराणांतरे तयागृहीतमात्रस्यचेष्टितान्युपलक्ष
येत् गात्रोद्वेगोनिराहारोरोलालाग्रीवानुवर्तनं लिंप्येतधातकीलोध्रमंजिष्ठातालचंदनैः धूपयेन्माहिषाक्षेणततोमुंचतिसाग्र
हीलेपनधूपनेवालस्य मारायणीयेवलिदानानुवृत्तौ मत्स्यमांससुराभक्ष्यगंधास्रक्धूपदीपकैः वलिंदद्यादितिशे
षेः वलिमंत्रः प्रयोगसारे ॐ नमोभगवतिचामुंडेविद्युज्जिह्वेहारहारअवसरंतुग्रहाहुतग्रंथागच्छंतुपातान्यतः
स्थानेरुद्रोज्ञापयतिस्वाहाविद्युज्जिह्वेह्रांह्रींहुंहुंमुंचमुंचस्वाहाइतिवालग्रहाणांविधेयंशस्तावलिनीवेदने वलि
श्चरवेरुदयेस्तादिनाद्देवादेयः वलिस्थानान्यपिप्रयोगसारे कदंवश्चकरंजश्चविनीतोनिंवएवच अश्वत्थोदुंवरश्चैवश्ले
ष्मातकवटौतथा मातृवृक्षाःक्रमेणोक्ताःपूर्वादिशांतदिगताः तेषामेकंसमाश्रित्यवलिंदद्याद्यथोदितमिति यतिस्थूल

विकारिणीतिच नानाविज्ञानविख्यातायोगिन्यः पांतुबालकं लंबाष्टलंबाचतथालंबकर्णीचलंबिका ज्वालाकराली
कालिंदीकालिकेतिपयोदिता स्वच्छंदाचारसंपन्नायोगिन्यः पांतुबालकं भगीतासुभगीताचमालिनीविश्वमालिनी विम
लाकमलामालीलीलारौद्रीचविश्रुता विचरंत्सोयथाकामंयोगिन्यः पांतुबालकं वायुवेगामहावेगासुवेगावेगवाहिनी श
शिनींहंसिनीत्वष्टा पुष्टिः पौष्टिकसिद्धिदा दिव्यानुभावावाहिन्योयोगिन्यः पां० भ्रमिणीभामिणीनित्यानिर्भिन्नासुभगा
गुहाल्केदिनीद्राविणीवामायोगिन्यः पांतु० रुद्रशक्तिविनिष्क्रांतामेकाशीतिक्रमोदितं योगिनिवृंदमेतद्धि सिद्धविद्याधरार्चि
तास्कंदग्रहाधिदेवंतद्वालकंपातुसर्वदा शकुनीरेवतीदेवीशिखाव्वमुखमंडिका प्रलंबापूतनाख्याविकठपूतनिकापुनः
विजयागोमुखीधूम्रामुंडमालातथापरा अथोलंबावपश्चाच्चकुमुदाप्यथचंडिका भामणीचेककालीचदेवीप्रेतमुखी
तथा ऐंद्रीमार्जारिकोभूयः कुरंगाचश्रुभालक्षणा कालरात्रिश्चमायावीहोलिकापिल्लिपिच्छिका भीतारणीचक्रवादाभोष
रागदुर्जयापरा तापनीकटकोलीचमुक्तकेशामहाबला अहंकारीजयातद्वदजमेषात्रिदंडिका रोदनीमुकुटाभिख्या
ललाटापिंगलातथा सीतलावालिनीचैवतापसीपापराक्षसी मानसीधनदादेवीवत्सदावर्तिनीतथा यमुनाजातवेदा
चमालिनीकलहंसिनी वालिकादेवदूतीचवायसीपक्षिणीतथा स्वच्छंदावालिकाचैववासिनीनादिकेतिच पंचाशतु

गि

कुलोत्पन्न चतुष्पष्टसमीरिता योन्योनिससंतुष्टाः स्कंदापस्मारदेवता नानारक्षाधिकारस्थावालकंपातुसर्वदा महालक्ष्मी
महांतकामहासेनामहावलाः महाकंपामहाभीमामहासीमामहोत्तवा महासेनामहाचंडामेहिनीवीरनायकी एक
वीराविशालाक्षीसुकेशीसुमनात्तथा सुकेशिनीचसंतुष्टादंडिनीचविलंविनी भामिनीचाथसौवर्णीसिंहवक्राकरा
किनी भ्रमराचंचलाचंडालासिद्धदापरा शाकोदरीधृतिः स्वाहास्वधास्याचसनातनी शवराचतथादेवीनीलग्रीवात्तथा
विका वित्तलागंधिनीवामाक्रीडंतीचैववाहिनी कार्षणीमालतीफुल्लकालकर्णीवचंडिका चित्राननागुहाचेतिपार्व
तीसंगनिर्गता पंचाशत्तिवसंपन्नाशाकुनीदेवतप्रिया योगिन्यः कामरूपिण्योवालकंपातुसर्वदा विभ्रांतयाप्रभावत्तास्
वेदासर्वगागुहा दुर्गासरस्वतीज्येष्टाश्रेष्टापद्मापरापरा प्रमादारोहिणीसीताप्रहृष्टाहारिणीविभा विभूतिर्वित्ततिःप्री
तीःप्रकृतिःप्रमतिर्यथा एताभगवतीस्रष्टायोगिन्यो योगसिद्धिदा पंचविंशतिराख्यातारेवतीशक्तिगोचरा जगदाथाप्र
कराबालकंपातुसर्वदा नंदश्चैवोपनंदश्चगोमतिः सुमतिस्तथा विद्युज्जिह्वोमहाकालः कराकस्तिमिलोचनः तेजहा
डाविरूपाक्षगोमुखोवडवामुखः कालाननः करालश्चशंकुकर्णोविभिषणाः एतेसक्रुंदनोपन्नावीराः षोडषराक्षसाः
पूतनादेवतातुष्टावालकंपातुसर्वदा वज्रीणीशक्तिनीचाघादंडिनीखड्गिनीतथा पाशिनीध्वजिनीदेवीगदिनीशूलि

नीपत्र यजिनीचक्रिणीचेतिसर्वाकाराभयप्रदाः येतादिङ्निताद्देव्योयोगिन्योदेवकीर्तिताः अधिभूतप्रधानापापापान्या
गतप्रजना प्रसन्नामातरः सर्वावालकंपांतुसर्वदा अर्थकोजलकोभूमः ...कंदश्चकीर्तितः वीरहापित्तृभिः सृष्टानेन
मेषाधिदेवताः पंचशक्तिप्रधानास्तेवालकंपांतुसर्वदा भैरवावीरमाताचक्षेत्रपालाविनायकाः डाकिन्योरुद्रशाकिन्यो
पक्षरक्षासिपन्नगाः वाप्यावांतराभूतामनुष्याः पशवोमृगाः सरीसृपाश्चसंतुष्टावालकंपांतुसर्वदा आदित्यावसवोरु
द्रा...तरोमरुतस्तथा मुनयोमनवः कालाग्रहयोगाः सनातनाः सिद्धासाध्याश्चगंधर्वादेव्यश्चाप्सरसावराः विद्याधरा
महादैत्यावालं० सहजायागजाश्चैववीरजामंत्रजास्तथा योगिन्योयोगविन्नियोनानाविभवगोत्वराः भवानीनामसंतुष्टा
वालं० भूर्लोकेचभुवर्लोकेस्वर्लोकेयाश्चमातरः अधश्चोर्ध्वंचतिर्यक्चचक्रीडंत्योनंतमूर्तयः प्रसन्नयोगसंपन्नादिव्य
रूपसमन्विता स्वछंदयोगसंभूतैःभैरवैःपरिवारिता रक्षंतुवालकंशांतिं पठंतुयेनसासदा दिव्यस्तोत्रमिदंपुण्यंवाल
रक्षाधिकारकं जयेत्सततानरक्षार्थंवालद्रोहोपशांतये इतिवालस्तवः इदंचस्तवातंक्रत्यंआद्यवर्षमासयोः द्वितीयादि
दिनमासवर्षेष्वपिकार्यं विशेषस्तूच्यतेकुमारतंत्रे प्रथमेदिवसेमासेवर्षेवायोगिनीतदा अथवानंदिनीनाम्नापूतना
क्रमतेशिशुं तद्गृहीतस्यवालस्यज्वरःस्यात्प्रथमेततः गात्रशोषश्चवेदर्ण्यनाहाछ्छाभृशंभवेत् छर्दिर्मूर्छाचकंपश्चहि

शां॰म नत्स्वरपुतस्तदा विधानंतत्रवक्ष्यामियेनमुंचतिपूतना नदिमृत्तिकयाकुर्यात्पुत्तीभर्नापुत्तलिकांततः भुक्तोदनंशुक्लगंधस्त
७४ थाश्शुक्लानुलेपनं शुक्लपुष्पाणिचपंचध्वजाःपंचप्रदीपकाः स्वस्तिकाःपंचपूर्वाह्णेपूर्वस्यांदिशिसंपुतः बलिंदद्याद्द्यो
शीरश्वेतसर्षपमेववा शिवनिर्माल्यमार्जारनृकेशान्निंबपत्रकं गव्यघृतंचेत्यनेनधूपयेच्चैववालकं एवंदिनत्रयंकृत्वाच
तुर्थेशांतिवारिणा स्नापयेद्बालकंपश्चाद्भोजयेच्चापिभिक्षुकं क्षीरेणभोजयेद्देवंसुस्थोभवतिबालकः शांतिवारिणेतिप्रा
न्नइंद्राग्नीशंनोवाताइत्यादिकैः स्वस्वशाखापठितैर्मंत्रैरभिमंत्रितंवारिशांतिवारि अथवावक्ष्यमाणमंत्रेणशतंकृत्वोभि
मंत्रितंवारिशांतिवारि द्वितीयदिवसेमासेहायनेवासुनंदनं गृह्णातिपूतनाबालंयोगिनीस्वस्तनौपिबा ततोभवेज्ज्वा
रः पूर्वसंकोचोहस्तपादयोः दंतान्स्वादत्यनिशंनिमीलयतिचक्षुषी आहारंचनगृह्णातिदिवारात्रौचरोदिति अस्थि
रोगंछर्दनंचभवेद्भीतिःपुनःपुनः रुग्णत्वंचजायेतइत्येतच्छिद्रलक्षणं तंदुलप्रस्थपिष्टेनविनिर्माणार्थपुत्रिका त्रयोदशध्व
जादीपास्वस्तिकायवलोदना प्रस्थप्रमाणपिष्टेनसिद्धापूपाश्चमत्स्यकाः मांसंचेत्येतदखिलंपश्चिमायांदिशित्यजेत् पश्चि
मायांचसंध्यायांएतद्द्याद्दिनत्रयं भूयःशांतिःस्नानब्राह्मणभोजनानिपूर्ववत् तृतीयेदिवसेमासेवर्षेवापूतनाभिधागृह्णाति
याद्योगिनीबालंततःपूर्वंज्वरोभवेत् प्रस्थप्रमाणपिष्टेनपुत्रिकांकारयेततः रक्तोदनंध्वजोरक्तःस्वस्तिकारक्तएवच। रक्त

पुष्पैरक्तगंधस्तथारक्तानुलेपनं पश्चिमायांच संध्यायां उदीच्यांनिशि गेहबलिं धूपशांतिस्नान ब्राह्मणभोजनानिपूर्ववत् च
तुर्थेह्नि मासेनुवर्षे गृह्णातिबालकं तुषमंडनिकानाम पूतनाचाथ योगिनी भीषणाख्या ततस्तस्य जायतेप्रथमंज्वरं गा
त्रभंगोस्थितिमूर्ध्नो वैवर्ण्यंचाक्षिमीलनं वैकल्यंश्यामतान्श्वासः कासोरुचिरतिंगीतं तिलपिष्टमयीं कृत्वापुत्तलिकांबिल्व
कंटकैः अष्टांगरक्षपेस्तुष्य पुष्पंभुक्तंधजोर्जुनः स्वस्तिकेहं प्रस्थ सिद्धं भक्तंतावद्रूपिकाः त्रिसंध्यंपश्चिमायांबलिंदद्या
द्विशेषतः तावद्रुपिकाइतिअर्धप्रस्थपरिमितेनान्नेनकृताइत्यर्थः गोशृंगंसर्पनिर्मोकंलशुनं बिल्वपत्रकं मनुष्यकेश
माज्जीरलोमान्यजस्तंतथा एतैश्चधूपयेदेकनिशि संध्यात्रयेपिच एकनिशि एकस्मिन्नेवदिने बलिरित्यर्थः शां
तिस्नानमंत्रब्राह्मणभोजनानिच पंचमेदिवसेमासेवर्षेवापूतनाशिशुं बिडालिकाख्यागृह्णीयात्स्यथमंजायतेज्वरः
छिन्नाश्वासश्चासश्चशूलंचगात्रभंगोरुचिस्तथा तंदुलप्रस्थापिष्टेनविनिर्मायाथपुत्तलिकां भुक्तोदनंध्वजापंचस्वस्तिका
पंचदीपोज्वला पंचदीपाश्चभुक्तानिकुसुमानिचचंदनं अपराह्नेवृक्षमूलेपश्चिमायांदिशिक्षिपेत् धूपस्तुगोशृंगलशुन
मित्यादिकंशांतिस्नानमंत्रब्राह्मणभोजनानिच षष्ठेहनितथामासेहायनेचापिबालकं पूतनाशकुनिनामगृह्णीयात्तद
नंतरं ज्वरमुद्वेजनंगात्रेशोषः श्वासोरुचिस्तथा कासश्चहस्तपादाक्षिसंकोचश्चैतिलक्षणं तंदुलप्रस्थपिष्टेनविनिर्माया

कपुत्तलिकां कृसरोदनं ध्वजाः पंचकृष्णाः स्वस्तिकपंचकं कृष्णमेवाथ मत्स्याश्च पायसं दुग्धमेव च मांसं चापूपकास्तद्वत् प्रस्थपिष्ट
विनिर्मितः पराह्णे पश्चिमाशायां निक्षिपेद्बलिपुत्तलिकां पुत्तलिकां पूर्ववत्कृत्वा पललं मूलपाचितं मत्स्यापर्पटिकाश्चैव र
क्तं प्रस्थसंमितं उदीच्यां पूर्वसंध्यायां बलिर्देयः प्रशांतये अत्र बलिदानयोर्विकल्पः तयोरेव कालयोर्बालकस्य धूपोदेयः गो
शृंगलशुनमित्यादिकः तथा शांतिस्नानं ब्राह्मणभोजनं च बलिदानपूजामंत्रस्तु ॐ फट् फट् स्वाहा सप्तमे दिवसे मासे वर्षे वा
शुष्करेवती गृह्णाति पूतनाबालं ततस्तत्प्रथमं ज्वरं गात्रभंगो पयविद्वेषः आहारे कंपरोदने इत्येतल्लक्षणं तत्र बलिर्देयः
प्रशांतये प्रस्थसंमितपिष्टेन सम्यक्कृत्वाथ पुत्तलिका सप्तध्वजाः सप्तदीपाः स्वस्तिकाः सप्त वै तथा पुष्पाणि मत्स्यमांसं च भ
क्तं चैवतु दत्त्वा हरेत् धूपस्तु गोशृंगशुनमित्यादिकः शांतिस्नानं ब्राह्मणभोजनं च मंत्रस्तु ॐ ह्रीं फट् स्वाहा अष्टमे दिवसे
मासे वर्षे वा कमते शिशुं विडालिकानामधेया पूतना स्यात्ततो ज्वरः गात्रभेदोश्रुरुधिरं रोदनं नेत्रमीलने जिह्वाशोषः शि
रस्फोटा आहारद्वेषमेव च अक्षिरोगो भवेदेतद्विंगितं तत् गृहाच्छिशोः तंदुलप्रस्थपिष्टेन पुत्तलीकारयेत्ततः पायसं मधुसर्पिश्च
क्षीरं लाजाश्च शष्कुली गुग्गुलं मेषमांसं च तथा पर्पटिका अपि ध्वजादीपाश्च स्वारोगंधा नानाविधा अपि सुमनांसि च रक्तानी
त्येवं मंत्रोदितो बलिः अमूं समाहरेत्पूर्वसंध्यायां दक्षिणा दिशि कृष्णाष्टम्यां वक्ष्यमाणः मंत्रेणानेन मंत्रवित् ॐ नमो नारायणा

पत्रेसौकाविद्रानन्दणाय ॐ ह्रींफट्स्वाहा अनेनैववक्ष्मंत्रेणपूजादिवलिहरणांतंकर्मकुर्यात्धूपस्तुगोशृंगलशुनमित्यादिका
शांतिस्नानंब्राह्मणभोजनंच अत्रकृत्स्नाष्टम्यांवलिहरणमितिननीयमार्यः किंतुसतिसंभवेप्राशास्त्यार्थं अन्यथातत्रतीक्ष्
णांशिशुनाशयतेः नवमेदिवसेमासेहायनेवापिवालकं गृह्णातिमृदनानाम्नाप्रूतनातदनंतरं ज्वरश्छर्दिर्घ्टणाध्मानं
कासःश्वासश्चतृष्णता गात्रभंगश्चसूत्रंचर्विन्हान्येतानिवालके प्रस्थमात्रेणपिष्टेनविनिर्मायवपुत्रिका ओदनंमत्स्य
मांसंचपर्यटीचेक्षुमूलिका निक्षिपेत्पूर्वसंध्यायां उत्तरस्यांवलिंदिशि अत्रमंत्रः ॐ नमोभगवतेवासुदेवायह्लम
डलेवलिमादायहनहुंफट्स्वाहा धूपस्तुगोशृंगलशुनमित्यादिकः शांतिस्नानंब्राह्मणभोजने दशमेदिवसेमासेहायने
वापिवालक पूतनारेवतीनाम्नीगृह्णीयात्वालकंततः ज्वरश्छर्दिःकासश्वासोभूलेचेस्येतदीरिते अन्नद्वेषश्चतत्रापिव
लिर्दैयोविचक्षणैः प्रथमप्रमाणपिष्टेनपुत्रिकांतत्रकारयेत् अष्टांगलेखयेतत्रविल्ववृक्षस्यकंटकैः गुडोदनंचसर्पिश्च
ध्वजानांपंचविंशतिःस्वस्तिकानांपंचविंशतिरेवच चत्वारिरक्तपुष्पाणि एतद्दक्षिणादिग्गतः संध्यात्रयेवक्ष्यमाण·मंत्रेणाने
नंनिक्षिपेत् ॐ नमोभगवतेवासुदेवायहनहुंफट्स्वाहा धूपोगोशृंगलशुनमित्यादिशांतिस्नानंब्राह्मणभोजनंच एकाद
शेदिवसेमासेहायनेपूतनाविकागृह्णातिवालकंपश्चाज्ज्वरस्तत्रप्रजायते अन्नद्वेषोमुखशोषोगात्रभंगश्चरोदनं ऊर्ध्वद

छिद्रोत्पन्नलक्षणं तद्ग्रहाक्रांतशिशोः पुत्रिकामाषपिष्टेन रचिताः शुक्लमोदनं पुष्पाणि पिष्टभुक्तानि ध्वजानां पंचविंशतिः स्वस्ति
रं.म कानां मदीयानां पंचविंशतिरेव च एतत्सर्वं यमाशायां संध्यायां प्रातरा हरेत् अत्र मंत्रः ॐ नमो भगवते नारायण चंद्रहासवज्रह
७६ स्तायज्वलदुष्टग्रहाय ॐ फट् स्वाहा धूपस्तु गोशृं० शांतिस्त्वा० व्रा० द्वादशे दिवसे मासे वर्षे वा पूतनाशिशुं अद्भुताख्या ग्र
हातिज्वरः स्यात्प्रथमं ततः रोदनं सर्वदा दंतखादनं रक्तनेत्र तारोमांचितस्तापश्च स्यात् दक्षिणं तस्य लक्षणं तंदुलप्रस्थपिष्टेन
कृत्वा तत्राय पुत्रिकां त्रयोदश स्वस्तिकाश्च ध्वजादीयास्तथैव च अपूपा मत्स्यमांसं च तथा पर्पटिका अपि एतत्सर्वं दक्षिणस्यां
दिशि मंत्रेण निक्षिपेत् मंत्रस्तु ॐ नमो नारायणाय प्रज्वलद्वज्रहस्ताय हर २ शोषय २ पातय २ हन २ दुष्टसत्त्वान् फट् स्वा
हा धूपस्तु गोशृं० शांतिस्त्वा व्रा० इति देवीगृहीतबालकरक्षणं अथ बौधायनोक्ता ज्वराद्युत्ततोशांतयः [illegible]जिपदिकष्टसंदेहो
वांतिदिनान्यष्टादश अग्निर्देवता अग्निरस्मीति पूजामंत्रः हेमी प्रतिमा घृतधूपो घृतदीपश्च यथासंभवं नैवेद्यं तैर्घृतं होमद्रव्यं
शांतिभवति अत्र सर्वत्र प्रथमं तत्तद्देवतामंत्रजपः सहस्रादिकः पश्चात्पूजाहोमं दानादि होमसंख्या चाष्टोत्तरशतादि व्याधि
तारतम्येन कल्प्या सहस्रं मृत्युनिर्देशो द्वितीयायां दिनानि षोडश ब्रह्मा देवता ब्रह्मजज्ञानमिति जपपूजाहोममंत्रः अगरुध
पः घृतदीपः सर्वत्र शर्करा नैवेद्यं तिलयवाज्यानि होमद्रव्यं प्रतिमा च हैमी तृतीयायां दिनानि नव पार्वती देवता गौरीर्मिमाय०

तिमंत्रः दूर्वाभिः पूजा कुंकुमधूपः गुग्गुलर्वा धूपः घृतदीपः द्राक्षाक्षीराज्यं नैवेद्यं पायसन्त्रिमधुराक्तं दूर्वाश्च होमद्रव्यं प्रतीमा
हेमीः चतुर्थ्यादिनानि षोडश गणपतिर्देवता गणानां त्वेति पूजा होममंत्रः हेमीप्रतिमा रक्तचंदनं गंधः करवीरादीनि पुष्पाणि
अगरूधूपः लड्डुकानि इक्षुखंडानि नैवेद्यं नारिकेलशकलानि इक्षुशकलानि कदलीफलानि च होमद्रव्यं पंचम्यादिनान्येक
विंशतिर्नागो देवता हेमीप्रतिमा नमोस्तु सर्पेभ्य इति मंत्रः चंदनं गंधः सुरभिपुष्पाणि घृतधूपः पयो नैवेद्यं तिलयवाज्यपाय
सशर्करामधूनि यथायोगं होमद्रव्यं षष्ठ्यादिनानि द्वादश स्कंदो देवता द्रप्सश्चस्कंदेति पूजामंत्रः पीतचंदनं रक्तवा गंधः रक्तानि पुष्प
णि जातीपुष्पाणि वा जटामांसी धूपः लड्डुकादि नैवेद्यं फलानि वा तिलयवाज्यं होमद्रव्यं हेमीप्रतिमा शांतिर्भवति सप्तम्यादिना
न्यष्टौ दिननाथो देवता आसत्येन आकृष्णेनेति वा मंत्रः हेमी ताम्रजा वा प्रतिमा कुंकुमगंधः करवीरादिपुष्पाणि धूपो गुग्गुलः
शर्करा घृतसंयुतं पायसं नानाफलानि च नैवेद्यं अर्कसमिधः पायसं होमद्रव्यं अष्टम्यादि षोडशदिनानि ईश्वरो देवता तमीशान
मिति पूजामंत्रः रजती प्रतीमा कर्पूरमिश्रचंदनं बिल्वदलानि अर्कपुष्पाणि नीलोत्पलानि वा पुष्पाणि जटामांसी धूपः पायसं
नानाभक्ष्याश्च नैवेद्यं त्रिमधुराक्ता तिला होमद्रव्यं रोगशांतिर्भवति नवम्यादिनान्यष्टादश भगवती दुर्गा देवता जातवेदस इति
पूजामंत्रः हेमीप्रतिमा रक्तचंदनगंधं कुंकुमादिकं वा जपाकुसुमादि पुष्पाणि गुग्गुलधूपः घृतपक्वं नैवेद्यं त्रिमधुराक्तं पायसं हो

मद्रव्यंदेयैदधिभक्तपात्रादानंतद्भक्तायवा दशम्यांदिनानिपंचविंशतिः यमोदेवताहैमीलौहीवाप्रतिमायमायत्वेतिपूजामं
त्रः चंदनंमृगमदश्चगंधः मधूमजेरसश्चधूपः तिलतैलदीपः विल्वपत्राणिकृष्णतिलाश्चपूजाद्रव्यंकृशरान्नंनैवेद्यंघृतमधु
तिलमुद्गाहोमद्रव्यं एकादश्यांदिनानिसप्तविश्वेदेवादेवताविश्वेदेवासइतिमंत्रः हैमीप्रतिमाश्वेतचंदनगंधः कृष्णागुरुधू
पः घृतदीपः तुलसीपत्राणिपूजायांयवमोदकंनैवेद्यंतिलयवमध्वाज्यंहोमद्रव्यं द्वादश्यांदिनानिदशरुद्रोदेवतायातेरुद्रेतिमं
त्रः हैमीप्रतिमाचंदनश्रीखंडं अगरुधूपः घृतदीपः पायसनैवेद्यंचंपकपुष्पंकमलंचपूजायांतिलयवाज्यमधूनित्रीहि
मद्रव्यंशांतिर्भवतित्रयोदश्यांदिनान्यष्टौत्राशीदेवतारौक्मीराजतीवामूर्तिः आप्यायस्वेतिमंत्रः पूजादौश्वेतचंदनंगंधः चं
दनधूपःघृतदीपःदधिशर्करानैवेद्यंतिलयवाज्यमध्वाक्ताहोमद्रव्यंशांतिर्भवति चतुर्दश्यांदिनानिद्वाविंशतिः शंभुर्देव
तानमः शंभवायेतिमंत्रःरौक्मीराजतीवामूर्तिः श्वेतचंदनंगंधः अर्कपुष्पंविल्वदलानिवा अगरुधूपः पायसंनैवेद्यंत्रिम
ध्वक्तास्तिलाहोमद्रव्यं अमायांदिनान्यष्टादशशचीदेवतायक्षदितिमंत्रः हैमीप्रतीमाकुंकुमादिगंधः नानासुगंधपुष्पाणिकृ
ष्णागरुधूपः फेणिकापूरिकादिनैवेद्यंशर्कराघृतपायसहोमद्रव्यं पूर्णिमायांदिनानिषोडशचंद्रोदेवतादमनकंपूजादिकम
न्यत्सर्वंत्रयोदशीशांतावुक्तंग्राह्यं इतितिथिदोषशांतिः अथाश्वलायनोक्तावारशांतिः आदित्यवारस्यरुद्रोदेवतायातेरुद्रे॰

त्तिमंत्रः हैमीराजतीवाप्रतिमांचंदनगंधः अगरुधूपः घृतदीपः पायसंनैवेद्यंहोमद्रव्यंच सोमवारस्यगौरीदेवतागौरीर्मिमा
येतिमंत्रः हैमीराजतीवाप्रतिमाकुंकुमगंधः सुगंधिपुष्पंअगरुधूपः घृतदीपः नानाभक्ष्याणिनैवेद्यंतिलयवहोमद्रव्यंदेव
भक्तसंतर्पणंच भौमस्यस्कंदोदेवता अन्यत्सर्वंषष्ठीशांतिवत् बुधवारस्यविष्णुर्देवता विष्णोरराटमसीतिमंत्रः हैमंस्वरू
पंपीतचंदनंपीतचंदनंपीतपुष्पंकमलानिच अगरुधूपः घृतदीपः पंचलड्डुकानैवेद्यंतिलयवाज्यहोमः गुरुवासरस्यब्र
ह्मादेवताब्रह्मजज्ञानमितिमंत्रः हैमीप्रतिमाकुंकुमगंधः पर्णपुष्पंगुग्गुलधूपः शर्कराज्यंनैवेद्यंतिलयवधानाघृतंहोम
द्रव्यंशुक्रवारस्यइंद्रोदेवतात्रातारमिंद्रमितिमंत्रः हैमीप्रतिमाचंदनगंधः चंपकपुष्पंअगरुधूपः घृतपक्वंनैवेद्यंतिलयवा
ज्यमधूनिहोमद्रव्यं शनिवारस्ययमोदेवतायमेनदत्तमितिमंत्रः हैमीलौहीवाप्रतिमाताम्रजेतिकेचित् चंदनगंधःकृष्णपु
ष्पंमधूधूपः तिलतैलदीपः मधुमत्स्याश्वनैवेद्यंतिलामधूचहोमद्रव्यंशांतिर्भवति इतिवारशांतिः अथनक्षत्रशांतयः वृ
द्धवसिष्ठः रोगशांतिंप्रवक्ष्यामिरोगार्तानांशरीरिणां बलिपूजाग्रहोमैश्चजपब्राह्मणभोजनैः यस्मिन्धिष्ण्येपदानृणांरोगःसंजा
यतेतदा तद्धिष्ण्यपूजाकर्तव्यातत्तदीश्वरतुष्टये सुवर्णेनतदर्धेनतदर्धार्धेनवापुनः धिष्ण्येशप्रतिमाकल्प्यायथावित्तानुसार
तः ईशान्यामथवाप्राच्यामुदीच्यांदिशिसंलिखेत् तंडुलोपरिपट्टदलंपद्मंगोमयमंडले पंचामृतैः सलेपैश्चततन्मंत्रैः पृथक्

स्नाप्यकल्पोक्तमंत्रेणप्रतिमांस्थापयेत्पुनः कर्णिकायांतुसंस्थाप्यध्यात्वादेवंसमर्चयेत् तद्वर्णवस्त्रगंधाद्यैरक्तधूपोपहा
रकैः आरक्तवर्णकुंभंचपंचत्वक्पल्लवैर्युतं शुक्लवस्त्रस्वर्णरत्नसर्वौषधिसमन्वितं मृत्सुचगव्यसर्वबीजफलक्षौद्रकु
शान्वितं देवस्यपूर्वेतस्थाप्यजलमंत्रैसमर्चयेत् प्रतिच्यांस्थंडिलेवन्हिंविधिवत्स्थापयेत्ततः मुखांतेजुहुयादुक्तद्रव्येण
ष्टसहस्रकं तिलहोमंव्याहृतिभिरष्टोत्तरसहस्रकं पूर्णाहुतिंचजुहुयात्सम्यग्जपादिपूर्वकं ततःशुद्धोपविष्टस्यरोगि
णः प्राङ्मुखस्यच मंत्रपूतैःकुंभजलैरब्लिंगैर्वारिमंत्रकैः मार्जनंकारयेत्तस्यसम्यक्तंत्रकल्पपूर्वकं नीराजनंचशुद्धात्मापूजास्था
नंसमागतः देवंहुताशनंभक्त्याप्रणम्यप्रार्थयेदिति अमृतोद्भवधिष्ण्यशंपतस्त्वंशंकरात्मजः रोगादस्माच्चतौरक्षत्ववभ
व्यामिधिष्ण्यपः इतिसंप्रार्थ्यततोदद्यात्प्रतिमांवस्त्रसंयुतां दक्षिणासहितांभक्त्याआचार्यायकुटुंबिने ब्राह्मणाययथा
शक्त्याब्राह्मणान्भोजयेत्ततः कृत्वानक्षत्रपूजातेतिथिवासरयोरपि सर्वान्कामानवाप्नोतिरोगीरोगात्प्रमुच्यते अश्वि
न्यामुत्थितोव्याधिर्नवरात्रेणमुंचति देवस्यत्वेतिमंत्रस्यगायत्रीकस्यपोश्विनौ श्वेतवर्णौसुधापूर्णकुंभमंभोजधरौपृथक्
चंदनासलपुष्पाज्यगुग्गुलैस्तुगुडप्रियौ क्षीरलड्डुकभोक्तारौसमिधःक्षीरवृक्षजाः गुडोदनबलिंदद्याद्दीपैःसार्द्धनिश
मुखे भरण्यामुत्थितोव्याधिरचिरान्निधनप्रदः मासेनमुंचत्यथवादैवस्यकुटिलागतिः त्र्यंबकस्यमंत्रस्यप्रोक्ताश्छंदषि

